अथ प्रकारान्तरेणातिथिपूजनमुपदिशति—के अतिथिब्राह्मणस्य शिरसि पुष्पाक्षतादिभिः ए अकारवाच्ये पादे पाद्यादिभिः ह्रीं देवताबुद्ध्या ईल ईड अन्नादिदानेन च सम्पूज्य स्तुहीत्यर्थः । अथ देवतार्चनं के चित्ते कस्योदाहृतकोशेन चित्तवाचित्वात् । अथ ए अकारवाच्ये अङ्कणे अकारस्योक्तकोशेनाङ्कणवाचित्वात् । मानसे सम्पूज्य पश्चाद्ब्राह्ये प्रतिमादौ चेत्यर्थः । ह्रीं ह्रींकारस्य हकाररेफेकारविन्दुनादात्मकतया रविहरिगणेशशिवाम्बिकानां तद्वाच्यत्वात्पञ्चदेवानित्यर्थः । "आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् । पञ्चदेवान्यजेन्नित्य"मिति स्मरणादील ईड सम्पूज्य स्तुहीत्यर्थः । "हकारस्सूर्यइत्युक्तस्सकारश्चन्द्रमास्स्मृतः" रः पावके हरौ कामे" "इकारः फणरत्नार्चिष्वग्रतोर्थगुहार्थयो"रिति कोशात् । इ अग्रतः ईयते पूज्यत्वेन गम्यतइति ई धातो रौणादिकः कर्तरि इच्प्रत्ययः । तस्मात्गणेश इति "विन्दुरूपस्सदाशिवः" "नारायणी नादरूपे"त्यादि प्रमाणवचनात् । ह्रींकारस्य पञ्चदेवतात्मत्वम् । एवं गृहस्थस्य सारभूतधर्मा निरूपिताः ।

अथ वानप्रस्थाश्रमस्य सारभूतधर्माणां सन्ध्यास्नानजपहोमस्वाध्यायातिथिदेवपूजनादीनां पूर्वमुक्तत्वाद्वासस्थानं योगञ्चोपदिशतिके गङ्गासागरपुष्करादितीर्थजले जहल्लक्षणया तत्तीरेष्वपीत्यर्थः । ए एकारे प्रश्लिष्टाकारयोजनात् ऐ अद्रिशिखरे ङिलोपश्छान्दसः । "ऐकारो दिङ्मुखे हस्ते हरेऽद्रिशिखरे त्वची"ति कोशात्तत्र स्थितः ह्रीं परदेवतां ईल ईड स्तुहीत्यर्थः । किञ्च ह्रीं हं नादं रं तेजः ई

कुण्डलिनीशक्तिञ्च ईल इर योगबलेनावगच्छ । "मन्त्रों हठो लयो राजा चेति योगश्चतुर्विध" इत्यादि शास्त्रोक्तरीत्या सिद्धिमाप्नुहीति तात्पर्यार्थः ।

अथ सन्यासाश्रमधर्मानुपदिशति—तत्र "अथ ब्रह्मसंस्थोमृतत्वमेती" ति छान्दोग्यश्रुतेर्ब्रह्मसंस्थित्यङ्गभूतसन्यासमुपदिशति—"यदहरेव विरजेत् तदहरेव प्रव्रजेदि" ति श्रुतेः के सुखे ऐहिकामुष्मिकरूपे ईलेत्यत्र ई इलेति छेदः ई इदमव्ययं "ई कोपे दुःखभावन" इति कोशाद्दुःखभावने सति एकारान्ते प्रश्लिष्टाकारस्य ईकारपरतया विसर्गरूपत्वेन ग्रहणात् अः शिखामित्यर्थः । "अशिशखायां सिद्धमन्त्रे प्रग्रहेऽर्करथार्वणि । चक्रे कुक्कुटमूर्ध्नीन्दुविम्वेब्रह्मेशविष्णुष्वि—"ति रत्नमालभिधानात् । अत्र सन्धिविभक्तिलोपश्छान्दसः । ह्रीं पूर्वोक्तन्यायेन यज्ञसूत्रञ्च इल क्षिप त्यजेदित्यर्थः । "सशिखं पवनं कृत्वा वहिस्सूत्रं त्यजेद्बुध" इति श्रुतेः । अथ यतेरनुष्ठानमुपदिशति—के शब्दे प्रणवमहावाक्यादिरूपे ए अकारवाच्ये परमात्मनि च गुरुमुखादाप्तनिष्ठस्सन् ह्रीं परां संविदं ईल ईरावगच्छेत्यर्थः । श्रवणमननिदिध्यासनपरो भवेति यावत् । 'आत्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुतेः । एवमाश्रमचतुष्टयसारधर्मानुपदिश्य क्षत्रविशोर्जीविकादिधर्मविशेषानुपदिशति—मध्यमकूटेन—क! हे क्षत्रत्वाभिमानि जीवात्मन्! हल ह्रीं हश्च हा च हं च तेषां समाहारः हं हं च लं च ह्रीं च हल ह्रीं ह्रीमव्ययं हकारवाच्यमश्वमुपलक्षणया चतुरङ्गसैन्यं लकारवाच्यां

पृथिवीं लक्षणया स्वराष्ट्रीयजनानित्यर्थः । ह्रीं परदेवतां च हस हस-विकास इति धातोरन्तर्णिचि लोण्मद्ध्यमः हासय विकासय सन्तोष-येत्यर्थः । सैन्यमन्नादिदानेन, स्वराष्ट्रीयजनान् शिक्षारक्षणादिना परदेवतां जपपूजादिनेति भावः ।

"हश्शङ्करे हरौ हंस रणरोमाश्ववाजिषु ।
गर्वे प्रचेतसि स्त्री तु हा त्यागे गतिवीणयोः ॥
हं क्लीबमस्त्रमुखयोः क्वणिते मणिरोचिषि ।
परब्रह्मामन्त्रणयोः स्त्रीषु तूत्तानहास्ययो" ॥ रिति

कोशेन हस्य वाजित्वाल्लस्य पृथिवीबीजत्वेन तद्वाचित्वात् ह्रीं पदस्य ह्रीं ह्रीं शरीरिणीति स्मरणाद्देवीवाचित्वात्तेषां यथायोग्यं प्रसादनीय-त्वमुक्तं देवीपूजनस्य पूर्वखण्डोदितत्वेऽपि क्षत्रादीनां तत्सामग्रीभेद-प्रदर्शनाय पृथगुक्तिरिति वेदितव्यम् । "परिस्रुतं झषमाद्यं पलं चभक्तानि योनीस्सुपरिष्कृतानी" त्यादि श्रुतेः क्षत्रियाद्यधिकारपरत्वेन गुरुज्ञानवासिष्ठोपासनाकाण्डेऽष्टोत्तरशतोपनिषदामर्थाविष्करणे भग-वता शिवेन दक्षिणामूर्तिना ब्रह्माणं प्रत्येकैकोपनिषदमपि निर्विविच्य निरूपितत्वात् । श्रीकालिदासापरनाम्ना लघुभट्टारकेणापि—

"विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै"

रित्यादिना लघुस्तुतौ विंशत्यां विवृतत्वाच्च । हकारस्योदाहृतकोशेन वह्वर्थकत्वात् क्षत्रधर्मविशेषा अन्येऽपि सूचिताः । यथा हं कोशागारे रत्नरोचिर्हंसविकासय रत्नवाहुल्याद्धनानि वर्धयेत्यर्थः ।

हं रणं हस हसे हसनइति धातोर्लोण्मध्यमः। अतिशूरतया युद्धं निर्भयत्वेनाभिभव तृणीकुर्वित्यर्थः। ह्रां त्यागं हस बहुदत्तमपि किं मया दत्तमिति महादानशीलत्वान्निस्सारयेत्यर्थः। तथा च हे क्षत्रिय! त्वं पुष्टसैन्यो रणशूरो धनाढ्यो महादाता राज्यं परिपालयन् परदेवतां भजस्वेति तात्पर्यार्थः। अथ वैश्यजीविकाधर्मानुपदिशति—तत्र हस क हल ह्रीमिति छेदः। हे क वैश्यत्वाभिमानिजीवात्मन्! त्वं ह्रीं "ह्रीङ्कारकन्दाङ्कुरिकाह्रीङ्कारतरुमञ्जरी ह्रीङ्कारपेटकमणि" रित्यादिस्मरणात् ह्रीङ्कारस्य कन्दसादृश्यतरुसादृश्यपेटकसादृश्यस्य च दर्शनाल्लक्षणया कन्दादीन् धान्यादीनित्यर्थः। रत्नादीन् रजतहिरण्यरत्नादीनित्यर्थः। हल 'हलविलेखन' इति धातोर्लोण्मद्ध्यमः। कर्षय देशान्तराद्विक्रयार्थमाहरेत्यर्थः। स्वदेशादपि देशान्तरे यथोचितसाधनानि विक्रयार्थं हल कर्षय नयेति चार्थः। हस न्यायविक्रयेण जनान् सन्तोषय न्यायार्थलाभेन स्वयमपि सन्तुष्टो भवेत्यर्थः। एवं वाणिज्यमुपदिश्य कृषिं देवतोपास्तिञ्चोपदिशति—हे क! हल कर्षय धान्यादि कृषिं वा कुर्वित्यर्थः। ह्रीं परदेवताञ्च हस जपादिना प्रसादयेत्यर्थः। वैश्यशूद्रयोर्विहितं कृषि वाणिज्यं कृच्छ्रे ब्रह्मक्षत्रयोरपि विहितमिति सूचनाय मद्ध्यकूटे निवेशितमिदं वेदितव्यम्। अथान्त्यकूटेनान्त्यवर्णादिधर्मानुपदिशति—सकलह्रीमिति—सकलाश्च ह्रीश्च सकलह्रीं सकलास्समस्ता उक्त ब्रह्मक्षत्रविशो जनास्तान् सर्वान् जनानित्यर्थः। ह्रीं परमेश्वरीं च हस हलेति पदद्वयमत्र मद्ध्यकूटादनुकृष्यते हस ब्राह्मणादीन् परिचर्या-

दिना सन्तोषय तद्दत्तान्नपानादिना स्वयमपि सन्तुष्टो भव जपादिना परदेवताञ्च हस प्रसादयेत्यर्थः । हल उक्तरीत्या कृषिं वाणिज्यं वा कुर्वित्यर्थः । शूद्रस्य मन्त्राधिकारस्तु "आश्रितासश्श्रितासश्च यज्वानोयेप्ययज्वन" इति श्रुत्या सिद्धान्तलेशसंग्रहादौ तन्त्रान्तरेषु च सम्यग्दर्शनाद्यथायोग्यं ग्राह्यः ।

अथ स्त्रीधर्मानाह—हे क! स्त्रीत्वाभिमानिजीवात्मन्! त्वं सकल ह्रीं हसेति पूर्वकूटादनुकृष्यते सकलं ह्रीं च हस सं प्राणवायुं कलयति रक्षतीति सकलः प्राणनाथः पतिः "सः पुंस्युमासुतेवाया" विति कोशात् । यद्वा कलया पत्नीरूपेण स्वार्धांशेन सहितस्सकलः "एष वा अर्धः पत्नी" ति श्रुतेः । सकलं पतिमित्यर्थः । परिचर्यादिभिस्सन्तोषयेत्यर्थः । "पतिस्स्त्रीणां तु दैवत"मिति स्मरणात् ह्रीं परदेवतां ध्यानजपनमस्कारैः प्रसादयेत्यर्थः । अभर्तृका नारी त्वं सकलं कलया सहितं विद्यावन्तं "सं क्लीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इति कोशात् । सं ज्ञानं कलयतीति सकलं ज्ञानदातारं वा गुरुं ह्रीं परदेवताञ्च हस गुरुमुखाद्यथायोग्यमवगम्य ध्यानजपनमस्कारैः प्रसादयेत्यर्थः ॥

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

इति भगवत्स्मरणात् किञ्च सर्वेऽपि स्त्रीपुंरूपा हे जनास्सकला आवृत्त्या सकल ह्रीं सकलं सादाख्यकलया सहितं श्रीगुरुं श्रीकामेश्वरं

ह्रीं श्रीकामेश्वरीश्चैकपदोक्त्या सम्मिलितां सकले श्रीकामेश्वरे स्थितां तद्गुत्संगवासिनीं वा ह्रीं श्रीमहानन्दमयीं शिवां सर्वकरणैस्सर्वदा भजतेति भावः । एवं कर्मकाण्डार्थनिरूपणे समुदिता अर्थाः श्रीदेव्यनुग्रहलेशेन प्रतीता एव नास्मत्समभिनिवेशत इति तामेव परदेवतां ध्यायामः "छन्दसिदृष्टानुकृते" रिति सूत्रात् "धातो-र्बह्वर्थत्वाद्बहुलग्रहणात्पृषोदरादित्वादाकृतिगणपाठेन स्वेच्छानुगुणा-दुणादिकल्पनतः छन्दसि सर्वविधीनां वैकल्पिकत्ववशादमुष्य मनोः सिद्धेः कथितेर्थेऽस्मिन् वैय्याकरणानुशासनानुमति 'रिति भासुरा-नन्दाचार्यवचनाच्च सर्वे समञ्जसा भवन्तु । इति शिवम् ।

त्रिपुराम्बिकाकटाक्षात्त्रिकाण्डसारार्थबोधिन्याम् ।
श्रीविद्याव्याख्यायां सम्पूर्णः कर्मकाण्डसारार्थः ॥

---

शुभमस्तु

# ॥ अथ द्वितीयभागः ॥

श्रीललिताम्बिकायै नमः

श्रीचक्रविन्दुमद्ध्यस्थशिववामाङ्कवासिनीम् ।
चिदानन्दमयीं देवीं नौमि श्रीललिताम्बिकाम् ॥

अथोपासनाकाण्डार्थ आरभ्यते—अत्रोपासनाकाण्डे चतुर्वेदान्तर्गतानेकसूक्तोपनिषत्सु प्रतिपादितसर्वदेवतानामवश्यमुपासनीयतया युगपत्सर्वदेवतोपास्तीनां विधिवदनुष्ठातुमशक्यत्वात्कातावद्देवता प्रथममुपास्येति चेदुच्यते—

यत्र यस्येह जन्मान्तरीयवासनाविशेषाभिनिवेशच्छ्रद्धाऽविशेषात्तत्रैव तस्याधिकृतत्वात्सैवोपास्या । न चैकस्मिन् जन्मनि चैकैकेवोपास्येति शङ्क्यं श्रद्धाविशेषोदयाद्देवतान्तरस्याप्युपास्यत्वात् । न च भक्तिविशेषादेकोपासनेनैव सर्वार्थसिद्धेरनेकोपासनाविधिवैय्यर्ध्यं वाच्यं अनेकविधवासनाभेदादेव जीवानामनेकविधोपासनाया उक्तत्वात् । तस्मात्स्वाभीष्टदेवतोपास्येति सिद्धम् । यद्येवं तर्ह्यविलम्वेन सर्वाभीष्टदात्री सर्वदेवदेववन्द्या सर्वोत्कृष्टतमा का तावद्देवतेति चेन्निष्पक्षभेदतया विचार्यते—अत्र तावत्सर्ववेदमन्त्रेषु प्रसिद्धस्योङ्कारस्य श्रेष्ठत्वात्तदर्थ एव विविच्यते—अकारोकारमकारविन्दुनादात्मकः प्रणवः । अकारो ब्रह्मा उकारो विष्णुः मकारो रुद्रः विन्दुः परमशिवः नादस्सच्चिदानन्दमयी शुद्धशक्तिः—अत्राकारस्योकारे,

उकारस्य मकारे मकारस्य विन्दौ, बिन्दोश्शुद्धातिसूक्ष्मनादे च विलापनदर्शनात्—

"सोयमात्माध्यक्षरमोङ्कारोधिमात्रं पादामात्रा मात्राश्च पादा अकार उकार मकार" इति—

"अकारो नयते विश्वमुकारश्चापि तैजसम् ।
मकारश्च पुनः प्राज्ञेनाऽमात्रे विद्यते गतिः"

इति च माण्डूक्योपनिषद्गौडपादीयकारिकाद्यनेकवचनात्पूर्वपूर्वस्योत्तरोत्तरे विलापनदर्शनादुत्तरोत्तरकारणतया श्रेष्ठत्वावगमादकारोकारमकारवाच्यानामपि विन्दुपदवाच्यस्य परमशिवस्य श्रेष्ठत्वमवगम्यते— "विन्दुरूपस्सदाशिव" इति स्मरणात्, "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्त" इति श्रुतेः ।

"घोरान्या शिवान्या उभे रुद्रस्य तनुः" ॥ इति श्रुत्या रुद्रस्य घोरतनुत्वेन किञ्चित्तामसत्वेऽपि परमशिवस्य शिवतनुत्वेन परमसात्त्विकत्वात् "विन्दुर्नादे विलीयत" इति स्मरणाद्बिन्दोरपि नादविलीनत्वात्ततोऽपि श्रेष्ठा नादपदवाच्या पराशक्तिः "नारायणी नादरूपा नामरूपविवर्जिता"

"शब्दशास्त्रमशेषन्तु धत्ते शर्वस्य वल्लभा ।
अर्थशास्त्रमशेषञ्च धत्ते मुग्धेन्दुशेखरः" ॥

"परापश्यन्तीमध्यमा वैखरी" ति च स्मरणान्नादस्य परे ब्रह्मणि लीनत्वात्तत्र समाप्यते । "नातः परं वेदितव्यं मूर्धोते व्यपतिष्य"

दित्यादि श्रुतेः । तथा च "सच्चिदानन्दं खलु परं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म नित्यविज्ञानमानन्दं ब्रह्मे"त्यादि श्रुतेः । तस्मात्प्रथमतः नादपदलक्ष्या ब्रह्मरूपिणी ईश्वरत्वादिविधायिनी पराशक्तिरेषोज्जृम्भते ।

"ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
न तस्य कार्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ॥

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"

"सैषा पराशक्तिस्सैषा शाम्भवी विद्या कादिविद्येति वा हादि विद्येति वा सादि विद्येति वा रहस्यं ओं ओं वाचि प्रतिष्ठा — एषात्मशक्तिरेषा विश्वमोहनी पाशाङ्कुशधनुर्बाणधरा एषा श्रीमहाविद्ये"त्यादि श्रुतिभिः "सा नित्या परमाशक्तिर्निर्विकल्पा स्वयं प्रभेति" सूतसंहितायां शक्तिनिरूपणप्रकरणे व्यासवचनात्—"त्वं परब्रह्ममहिषी"त्यादि वचनाच्च श्रीविद्यापरदेवतैव ह्युत्तमोत्तमतमा विज्ञायते । अस्या एव ब्रह्मादीनामपि पीठभावापन्नतया सर्वदेवतोपासनानामत्राभ्यर्हितत्वादुपासनाकाण्डार्थसारसर्वस्वभूतां श्रीविद्यात्रिपुरसुन्दर्युपासनामेवात्रोपदिशति वाग्भवशक्तिकूटाभ्यां सहैव कामराजकूटेन—

प्रथमं मन्त्रग्रहणमुपदिशति – प्रथमखण्डे ए इकारस्य सम्बुद्धिः हे कामशिव ! इकारस्य हरस्य स्मरस्य च वाचित्वात् ।

"इकारः फणरत्नार्चिष्वग्रतोर्थगुह्यार्थयोः । ह्रे करेणौ कक्ष्यान्ते निशाकरकरे स्मर" इति नानार्थरत्नमालाभिधानात् । श्रीविद्योपदेष्टारं श्रीगुरुं शिवरूपत्वेन सम्भाव्य सम्बोधयेदित्यर्थः । स्वगुरुदेवतानामभेदभावनाविधानाच्छ्रीविद्यां मेऽनुगृहाणेति सम्प्रार्थ्येति शेषः । ततः ह्रीं ह्रीर्लज्जा सङ्कोचप्रकृतिरावरणशक्तिरिति यावत् । यद्वा ह्रत्यात्मज्ञानमपहरतीति ह्री अविद्या अज्ञानमायापर्यायरूपा तां मिनोति नाशयतीति ह्रीं विद्यामित्यर्थः । "हृञ् हरण" इति धातो "मींञ् हिंसाया" मिति धातोश्च क्विन् । मकारस्य लुप्ताकारत्वेन ग्रहणम् । तथा अगस्त्यमुनिभाष्येऽपि प्रदर्शनाच्च —के—चित्ते "को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिष्वि"ति कोशात् । ईल ईर "ईर गतौ शब्दे चे"ति धातोः लोण्मध्यमः । सिलोपश्च छान्दसः । गत्यर्थानां ज्ञानार्थकत्वादवगच्छ — । गुरुमुखान्मन्त्रं श्रुत्वा चित्तेऽवधारयेत्यर्थः । चित्त एवावधारणविधानान्मन्त्रस्य वीर्यवत्वगोप्यत्वादिश्च बोधितः ।

"मननात्त्रायते यस्मान्मन्त्र इत्यभिधीयत" इत्यादि स्मरणाच्च बहिरुच्चैरुच्चारणे मन्त्राणां मन्त्रत्वमेव हीयत इति भावः । अथ तन्त्रेष्वपि क्वचिद्द्वात्रिंशद्विधा अष्टादशधा त्रिपुरा तापनीये बहुपु द्वादशधा च विद्यामन्त्राः प्रपञ्चिताः । तत्रापि प्रधानभूता हादि सादिकादि विद्या इति दर्शयति — द्वितीयखण्डे — हश्च सश्च कश्च हसकाः हकार सकार ककाराः हानि मुखानि यासां ताः हादि सादिकादयः ।

“हं क्लीवमस्त्रमुखयोः काणिते मणिरोचिषी ”ति कोशात् । लह्रीं लश्चन्द्रः —

“लः खण्डने त्रिष्वदाने स्त्री नेन्दौ लवणे तुल” मिति कोशात्तस्य ह्रीमव्ययं चन्द्रविद्याः तन्त्रेषु वहुशश्चन्द्रविद्येति श्रीविद्याया नामान्तरत्वस्मरणात् । हादि श्रीविद्या सादि श्रीविद्या कादि श्रीविद्येत्यर्थः । त्रिपुरातापनीयोपनिषदि द्वादशविधाः प्रधानभूता विद्या उद्धृतास्तत्रापि प्रधानभूतास्तिस्रः “कादि विद्येतिवा हादि विद्येति वा सादि विद्येति वा रहस्य ”मिति वह्वृचोपनिषदि श्रवणात् । तत्रापि प्रधानभूते द्वे कादि हादि विद्ये । त्रिपुरोपनिषदि तयोरेव विधानश्रवणात् ।

तत्रापि श्रेष्ठतमा कादि विद्यैव । अथर्वशिरोपनिषदि तस्या एव विधानश्रवणात् ।

“श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथापरे ”ति स्मरणात् त्रिशत्यामस्या एवादृतत्वाच्च । श्रेष्ठतमां कादि विद्यामनेनैव दर्शयति— हसकहानि हकार सकार ककारमुखानि कामराजशक्तिवाग्भवकूटानि तेषु लह्रीमर्थात्प्रत्येकमन्ते लकार ह्रीङ्कारौ यस्यास्सा । यद्वा हसकहाः हकारसकारककारमुखाः लाः खण्डाः कामशक्ति वाग्भवाख्याः “लः खण्डने त्रिष्वदान ” इति कोशाल्लस्य खण्डार्थ सम्भवात् । यस्यास्सा हसकहला सा च ह्रीं विद्या च हकार सकारककारादिमाक्षरयुक्त कामराजशक्ति वाग्भवखण्डत्रितयविशिष्टा विद्या

कादि श्रीविद्येत्यर्थः । अत्र खण्डव्यत्ययस्त्वस्या विद्यायाः परमश्रेष्ठतयाऽत्यन्तगोप्यत्वान्नयत्रकुत्रापि प्रकटितव्यं श्रीपरमगुरुमुखादेवावगन्तव्यं विद्यारहस्यमिति ।

"राज्यं देयं शिरो देयं न देया षोडशाक्षरी" त्याद्युपदेशप्रकाशनार्थः । अथ कादि विद्यामन्त्रवर्णसङ्ख्याञ्च दर्शयति—अन्त्यखण्डे सश्चन्द्रस्सकारस्य चन्द्रबीजत्वात्तस्य कलाः षोडश ता एव कलाः षोडशाक्षराणीति श्लिष्टरूपकं यस्यास्सा स कला सा च ह्रीं विद्या च षोडशाक्षरी विद्येत्यर्थः ।

ननु श्रीविद्यायाः "कामो योनिकमला वज्रपाणिर्गुहाहसामातरिश्वाभ्रमिन्द्रः पुनर्गुहा स कला मायया च पुरुच्येषा विश्वमातादि विद्ये" त्यादि श्रुत्या "अहं पञ्चाक्षरी देवि त्वं तु पञ्चदशाक्षरी" ति ज्ञानार्णवोक्तेः "श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथे" ति सहस्रनामाध्याये "कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तित" इत्यादि त्रिशतीनामाध्याये च । एवं बहुषु तन्त्रेषु च स्मरणात् । अत्र हकार सकारककाराद्यक्षरयुक्त खण्डत्रयाणां लकार ह्रींकारयोः प्रत्येकमन्त्ये श्लिष्टत्वान्मध्येऽन्यवर्णानां घटनाऽसम्भवात् । "भूमिश्चन्द्रश्शिवो माया शक्तिः कृष्णाध्वमादनौ । अर्धबिन्दुश्च बिन्दुश्च नवार्णो मेरुरुच्यते" "महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवा" इति ज्ञानार्णववचनादुक्तवर्णान्यवर्णस्यासम्भवाच्च पञ्चदशार्णान्येव विद्यायाः । कथं चन्द्रस्य षोडशकलामयत्वेन षोडशाक्षरत्वमिति वक्तुं युक्तमिति चेन्नैषदोषः—यद्यपि चन्द्रस्य कलाः षोडशैव तथापि प्रतिपदादि-

तिथिरूपाः पञ्चदशकला एव शुक्लकृष्णपक्षयोर्वृद्धिक्षयरूपेण सर्वैस्सम्प्रदृश्यन्ते नैव षोडशी कला दृश्यते—न च षोडशी कलैव नेति शङ्क्यं षोडश्याः कलायाः अभाव अमान्ते चन्द्रस्यैव नाशप्रसङ्गात् तस्माद्यथा चन्द्रस्य षोडशी कला सर्वकलावीजरूपा क्षयवृद्धिरहिता सर्वकलामयी सादाख्या परा कला सूक्ष्मा पञ्चदशतिथिरूपकलास्वेवान्तर्भूता । तथा षोडशीकला पञ्चदशार्णेष्वेवान्तभूता सर्ववीजरूपा साऽन्त्यखण्डाद्यवर्णे मध्यखण्डचतुर्थचतुर्थवर्णे च मिलित्वाऽहार्णरूपा विलसति । तथा योगिनी हृदये वरिवस्यारहस्येऽपि कथनात् । किञ्चास्याः कलायास्त्रिविन्दुरूपत्वाद्विद्याखण्डान्त्यवीजेषु त्रिविन्दुरूपा तेष्वेव पश्यन्त्यादिमयत्वाच्च ससूक्ष्मविन्दुतुर्यस्वररूपा च विलसति

"अहकारौ शिवशक्ती शून्याकारौ परस्पराश्लिष्टौ ।
एषाहं पदतुर्य- स्वरकामकलादिशब्दनिर्देश्या ॥"

"मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा ।
क्लींकारीकेवला गुह्या कैवल्यपददायिनी ॥"

इत्यादि वचनात् "कमलं परिलुप्ये" त्यादिना श्रीचक्रविन्दौ वर्णविन्यासविधायकवचनाच्च । तथाभूतात्र षोडशी तुर्यकलारूपा कला विलसति । तस्मात्स्थूलदृष्ट्याया पञ्चदशाक्षरी सूक्ष्मदृष्ट्या सैव षोडशाक्षरी विद्येति ब्रूमः । ननु "चत्वार ईं विभ्रति क्षेममन्त" इति श्रुत्या चेङ्कारचतुष्टयस्य विद्यायां वक्तव्यत्वाच्छ्रीवीजमप्यन्ते योजनीयमिति चेन्न—प्रथमखण्डे तृतीयवर्णस्य सत्वादेव ईंकारचतुष्टयसम्भ-

वान्नतस्याऽविन्दुत्वात्तत्सिद्धिरिति वाच्यम् । ए कारान्ते श्रूयमाणा-कारस्य सूक्ष्मरूपत्वाद्विन्दोस्सुक्ष्माकारग्रहणवदीङ्कारत्वलाभान्न च पञ्चदशार्णत्वं भज्यत इति वाच्यम् । "एङः पदान्तादती" ति सन्धिसूत्रेण तल्लाभात् । तथा च मुनिप्रणीतविद्या सगुणार्थे कथि-तत्वेन प्रामाण्यात्तस्य सिद्धिरिति चेन्नास्माकमत्राग्रहः । सूक्ष्माकारस्य विन्दुरूपतया सविन्दुकतुरीयकलालाभात्परमार्थप्राप्त्या चेष्टापत्तेः । यद्येवं स्यात्तर्हि श्रीवीजस्य षोडशर्णत्वविधानं क्वाचित्कमपि तत्र का गतिरिति चेत्तस्य हयग्रीवगदितविद्यान्तरत्वेन स्वीकारादिति श्री-भास्कररायाचार्यैरुक्तत्वात् । तदस्तु नाम ताव "चत्वार ईं विभ्रतीति" श्रुतेश्चत्वारः खण्डा इत्यर्थसम्भवात्कथं त्रिखण्डेन ईं कार चतुष्टय-भरणमिति वाच्यं—"विद्याकूटैश्चतुर्भिश्च गायत्रीचतुरंघ्रिभिः । सम्मेलनेन यो जापः कोटि कोटि फलप्रद" इति स्मरणात् । गायत्री पादचतुष्टयं विद्याकूटचतुष्टयेन पुटित्वा जपविधानाद्विद्याया अपि तुरीयखण्डोऽस्त्येव ।

विद्यायास्तुरीयखण्डोद्धारे वाग्भवकामराजकूटान्त्यस्थयोर्माया-बीजयोर्हाने तत्सिद्धिः कादिविद्यायास्तु सेन्दुतुरीयस्य कमलाया अपि तुरीयखण्डत्वात् ।

खण्डचतुष्टयेनेङ्कारचतुष्टयं भ्रियतां—तथापि प्रथमखण्डे एकारान्ते श्रूयमाणाऽव्यक्ताकारस्य ग्रहणं चन्द्रस्य षोडशकलाग्रहण-वदिति ज्ञेयम् ।

अत एवाभेदः पञ्चदशी षोडश्योः श्रुत्याम्नायते—"सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी" ति । अथाष्टाविंशतिवर्णविशिष्टा विद्येति गौडपादीयं सूत्रं—अत्र—"हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैस्तथाक्षरै" रित्यादिवचनात्पञ्चदश्या एवाष्टाविंशतिवर्णत्वं ह्रीङ्कारस्य पञ्चाक्षरत्वाभिप्रायेणेति श्रीभास्कराचार्यैस्सहस्रनामभाष्येऽभिहितं तत्प्रौढवादम् ।

अत्रेदमवधेयम्—श्रीत्रिपुरोपनिषदि "कामो (क) योनिः (ए) कमला (ई) वज्रपाणिः (ल) गुहा (ह्रीं) हसा (हस) मातरिश्वा-(क) अभ्रं (ह) इन्द्रः (ल) पुनर्गुहा (ह्रीं सकला (सकल) मायया च (ह्रीं) पुरूच्येषा विश्वमाताऽदि विद्या" इत्युच्यते पुरूची पुरातनी विश्वमाता शब्दार्थात्मकसर्वप्रपञ्चजनन्येषा पञ्चदशाक्षरी आदि विद्या श्रीजगन्मातुस्सर्ववेदमन्त्राणां सर्वविद्यानां च कारणभूता परमोत्कृष्टा श्रीपञ्चदशाक्षरी श्रीविद्येत्यर्थः ।

देव्यथर्वशिरोपनिषदि तु "कामो योनिः कमला वज्रपाणि र्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः पुनर्गुहा स कला मायया च पुनः कोशा विश्वमातादिविद्यो"मिति ह्युच्यते । बहुषु पुस्तकेषु सम्यग्दृश्यते च "पुनः कोशा विश्वमातादि विद्यो" मित्यत्र षोडशाक्षरत्वेनोक्तं कोशबीजं श्रीमिति बीजाक्षरमेव । कोशो नाम धनागारं तदधिवासिनी श्रीभगवती कोशेत्यर्थः तद्बीजं श्रीमित्यर्थः ।

"ई च श्रीरपि लक्ष्मीश्च भूमिश्चेति चतुष्टय"मिति बीजरत्नकोशादप्यवगम्यते । विश्वमाता जगज्जननी आदिविद्या सर्ववेद-

शास्त्राणामपि कारणभूता श्रीषोडशाक्षरीविद्येत्यर्थः । "ओमिति ब्रह्मस्वरूपिणीयं विद्ये "त्यर्थः । एवमादिश्रुतिवाक्यान्यवलंब्यैवागमेषु पुराणेष्वपि षोडशाक्षरीति प्रतिपाद्यते । अत एव श्रीशङ्करभगवत्पादाचार्यैरपि "श्रीमन्त्रमातृकापूजास्तोत्रा "दौ श्रीबीजस्य षोडशाक्षरत्वं परिगृहीतम् । सौन्दर्यलहरी व्याख्याने श्रीलक्ष्मीधराचार्यैरपि श्रीबीजस्य षोडशाक्षरत्वं तुरीयखण्डत्वञ्च सम्यगुपपादितम् । "चत्वार ईं बिभ्रति क्षेममन्त " इति श्रुत्यर्थोपि सम्यङ्निरूपितः ।

किञ्च देवी सहस्रनामभाष्ये "श्रीषोडशाक्षरीविद्येत्यत्र श्रीबीजं षोडशाक्षरमिति पूर्वोक्तश्रीभास्कराचार्यैरेव सम्यगुदितं, गुरुपरम्परया तथोपदेशोऽपि प्रसिद्धोऽनुभूयते च ।

पञ्चदश्यान्तु तुरीयस्वरूपा कामकला सूक्ष्मरूपेण विराजत एव षोडशाक्षरी तु श्रीबीजावसायिनी पञ्चदश्यैव न सन्देहः ।

अष्टाविंशतिवर्णविशिष्टा विद्येति श्रीगौडपादीयसूत्रन्तु महाषोडशीपरमेव नहृल्लेखायाः पञ्चवर्णत्वविवक्षणेन पञ्चदशीपरम् । तथात्वेऽपि सप्तविंशतिवर्णान्येव लभ्यन्त इति । महाषोडशी नाम—

" अष्टौ बीजाक्षराण्यादौ पश्चात्पञ्चदशी ततः ।
पञ्चबीजाक्षराण्येषा श्रीमहाषोडशी मता "॥

तदुद्धारक्रमस्तु—

" श्रीमाया कामवाक्शक्तितारमाया रमाः क्रमात् ।
विद्या पञ्चदशी पश्चाच्छक्ति वाकामचिद्रमाः ॥

श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं
15 सौः ऐं क्लीं ह्रीं श्रीं

अष्टाविंशतिवर्णेयं पूर्णा पूर्णफलप्रदा ।
बोधदीप्त्यादिसंयुक्ता श्रीमहाषोडशाक्षरी" ॥—

इत्यादिवचनादिति च ।

तस्मादादिविद्यां श्रीमत्पञ्चदशाक्षरीं श्रीकादिविद्यां पूर्वं गुरुमुखाच्छ्रुत्वा चित्ते सम्यगवधारयेत्युपदिष्टं भवति ।

अथास्य श्रीविद्यामन्त्रस्य ऋषिछन्दोदेवतादीन्यपि दर्शयति— प्रथमखण्डे कः कामः मन्मथऋषिरित्यर्थः । "तदिति ककारः कामं व्याप्नोति"—"कामयोनि" रित्यादि श्रुतेः । आदौ मन्त्रद्रष्टा वा मन्त्रसिद्धो वा ऋषिरिति निर्वचनात् — "पुत्रो निर्ऋत्या वैदेहः अन्धो मणिमविन्द" दित्यादि श्रुत्या, कामसेविता कन्दर्पविद्ये"त्यादि स्मरणात्, भासुरानन्दाचार्यैस्सहस्रनामभाष्ये "अस्य मन्मथऋषिरिति विज्ञायत" इत्युक्तत्वाच्च । यद्वा कः कामः महाकामः कामशिवः "सोकामयत बहुस्यां प्रजायेये"ति श्रुतेः । कस्य सुखवाचित्वाच्चानन्दभैरवऋषिः । यथा गुरुपारम्पर्यक्रमं ग्राह्य इत्यर्थः । ऋषिन्यासस्थानमपि — के शिरसीत्यनेनैव विज्ञेयम् । ए एकारेण छन्दोभिधीयते तस्य वाग्बीजांगत्वात् । अस्य न्यासस्थानं मुखमेव—अस्य वाग्बीजत्वात् । मातृकान्यासे चौष्ठस्थानतया मुखसम्बन्धित्वाच्चेति । षड्विंशति छन्दस्सु अत्र किन्नाम छन्द इति चेदुच्यते — गायत्र्याश्चतुर्विंशत्यक्षरवत् ।

" वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् ।
अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्" ॥

इति श्रुत्या मायाबीजस्य चतुर्वर्णात्मकत्वात् अत्र मायाबीजत्रितयस्य द्वादशवर्णानि कादीनि द्वादशाहत्यात्रापि चतुर्विंशत्यक्षरत्वात् आवृत्ति-रहितगायत्रीवर्णानां त स वि र ण य भ र्गो दे धी म हि नः प्र चा इति पञ्चदशवर्णत्वात् विद्यायाश्च पञ्चदशाक्षरत्वात्, गायत्र्याः पादत्रयवदस्या अपि कूटत्रयत्वात् त्रिपुरातापनीयोपनिषदि "तदिति ककारइत्यारभ्य गायत्र्याः श्रीकादिविद्योद्धारकत्वेन गायत्रीश्रीविद्या-योरेकीकरणाद्विद्यायासूक्ष्मगायत्रीत्वाच्छ्रीदेवीविषयत्वाच्च देवी गायत्री छन्द इति । ह्री मिति देवता वाच्यवाचकयोरभेदात् । का नाम देवतेति चेत्—हकाररेफे काराणां त्रिपुराणां स्थूलसूक्ष्मकारणदेहानां मातीति म् मातेः किप् मात्री ह्रीं सर्वलोकसाक्षिणी श्रीमहात्रिपुर-सुन्दरी देवतेत्युच्यते । "सैवपुरत्रयं शरीरत्रयं" व्याप्य वहिरन्तर-वभासयन्ती देशकालवस्त्वन्तरसङ्गा "न्महात्रिपुरसुन्दरी वै प्रत्यक्-चिति" रिति श्रुतेः । अस्या न्यासस्थानन्तु हृदयं "हृदयागार-वासिनीहृल्लेखे" ति "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्" इत्यादि श्रुतेः ।

एवं शिरोमुखहृदयेषु ऋषिछन्दोदेवताः ईल ईर विन्यसेत्यर्थः ।

"ऋषिर्गुरुत्वाच्छिरसैव धार्य-<br>
श्शब्दात्मकत्वान्मुख एव छन्दः ।<br>
हृद्यात्मरूप्यात्किलदेवतास्या-<br>
न्न्यासक्रमोऽयमृषिभिः प्रणीतः ॥"

इति स्मरणात् ॥

अथ बीजशक्तिकीलान्यपि दर्शयति—द्वितीयखण्डे हसकैः व्युत्क्रमेण कादि सादि हादि कूटैर्ह्ल ह्रीमिति बीजशक्तिकीलकानि

"हं क्लीवमस्त्रमुखयोः क्वणिते मणिरोचिषि ।
परब्रह्मामन्त्रणयोः त्रिषु तूत्तानहास्ययोः" ॥

इति कोशात् हकारस्य परब्रह्मवाचित्वाद्धकारेण बीजमुच्यते

"आग्नेय्यपि च सावित्री द्विधैवोष्णे मते मम ।
तयोर्बीजे रलौ देवि तथाभूतेषु च द्वयोः" ॥ इति

शैवागमरहस्योक्तेः लस्य सवितृशक्तिवाचित्वाल्लकारेण शक्तिरुच्यते ह्रींकारस्य मायावाचित्वान्मायया कीलिताजना इति न्यायात् ह्रींकारेण कीलकमुच्यते । एवञ्चोक्तक्रमेण कूटत्रयेण बीजशक्तिकीलकानि ईल विन्यसेत्यर्थः । बीजशक्ति कीलकन्यासस्थानन्तु—

"कण्ठाधः कटिपर्यन्तमध्यकूटस्वरूपिणी ।"

इति न्यायान्मध्यकूटविहितत्वादेव मध्यदेह एवेत्यवगम्यते तत्स्तनयोस्तदधस्ताच्चेति । यद्यपि तन्त्रेषु—

"बीजं बीजे प्रविन्यस्य ह्रूरौ शक्तिश्च विन्यसेत् ।
पादयोः कीलकश्चेति विनियोगस्तथाविधः ॥"

इत्यादिनोक्तं तथापि स्तनयोस्तदधरे च बीजशक्तिकीलकन्यासविधानस्य रामतापन्युपनिषदि श्रवणात् "यन्नाभ्या अधस्तदमेध्य" मिति नाभ्यधोभागस्यास्पृश्यत्वश्रवणाच्छ्रौतस्य प्राधान्यात्तदेवादरणीयमि-

त्यर्थः । एवं बीजशक्तिकीलकानि विन्यस्य विनियोगस्यानुक्तत्वाद-भीष्टार्थ इति सिद्ध्यति करन्यासस्तु द्विरावृत्त्या कूटत्रयेण वक्ष्यमाणा-ङ्गन्यासमन्त्रेणैवेत्यर्थः । अथाङ्गन्यासं दर्शयति तृतीयखण्डे—सकलै-स्सर्वैर्वाक्कामशक्तिकूटैर्ह्रीं अव्ययमत्र हकाररेफौ द्वौ तथेङ्कारस्य त्रिकोणत्रिविन्दुरूपत्वाच्चतुरवयवत्वेन चत्वार आहत्यास्य षडङ्गत्वा-त्प्रकरणात् षडङ्गेषु हृदयशिरोशिखाकवचनेत्रास्त्रस्थानेषु ईल न्यासं कुर्वित्यर्थः । अथ दिग्वन्धनविमोचने दर्शयति—सकलेति । व्युत्क्रमेण लकारेण भूः तस्य पृथ्वीवीजत्वात् । ककारेण भुवः तस्य वायु-वाचित्वात् । सकारेण स्वः तस्य चन्द्रवीजत्वात् । ह्रीमित्योङ्कारस्तस्य पञ्चप्रणवान्तर्गतत्वेन प्रणवात्मकत्वात् । एवञ्च व्याहृतित्रययुक्तप्रणवेन दिग्वन्धनमन्ते विमोचनञ्च कुर्वित्यर्थः ।

ध्यानमानसपूजाविधानञ्चोपरिष्टाद्वक्ष्यते—अथ विद्यामन्त्रजपः—जपे च तत्र वर्णानां मात्रां दर्शयति—सकलेति । कलाभिर्मात्राभिस्सहि-ता सकला सा च ह्रीं विद्या च तथोक्ता ।

अथ प्रथमखण्डे—के—शब्दे वर्णोच्चारणे ए—ए—कारो द्विमात्रः एकारस्याकारेकारद्वयसम्मिलितत्वेन गुर्वक्षरत्वात् "लघ्वक्षरोच्चार-मात्रो निमेषो मात्रया सम" इति कोशात् ।

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनन्त्वर्धमात्रकम्" इति

वचनाच्च । ईकारोऽपि द्विमात्रः गुरुत्वात् । लस्सार्धैकमात्रः । एवञ्च

ईंलेति सार्धं त्रिमात्रकं ह्रीमित्यर्थः । एवं क्रमणे हसकादीनामूह्यम् । उक्तञ्च वरिवस्यारहस्ये—

"आद्ये दश मद्ध्ये तास्सर्द्धास्तार्तीयकूटेष्टौ ।
एकलवोनाह्यूनत्रिंशन्मात्रा मनोर्जपे काल ॥" इति

मन्त्रस्य कूटत्रयत्वेऽपि एकरूपत्वादेव प्रथमकूटान्त्यवर्णनादेन साकं द्वितीयकूटं तदन्त्यवर्णनादेन साकं तृतीयकूटञ्चोच्चारणीयमित्युपलभ्यते । उक्तञ्च—

"नादः प्राथमिकस्तु द्वितीयकूटेन साकमुच्चार्यः ।
द्वैतीयीकं नादं तार्तीयीकेन नोच्चरेत्पृथक् ॥" इति

अथात्र जपोऽनुदात्तादिस्वरपूर्व एव कार्यः । तच्च सकलेत्यत्र कलाशब्दस्य स्वरवाचकत्वात्स्वरसहिता ह्रीं विद्येत्यर्थाल्लब्धं पूर्वाचार्यैरुदितञ्च—तद्यथा—प्रथमखण्डे प्रथमवर्णोऽनुदात्तः, द्वितीयतृतीयावुदात्तौ, चतुर्थस्स्वरितः, पञ्चमः प्रचयः, द्वितीयखण्डे प्रथमद्वितीयतृतीयचतुर्थवर्णा अनुदात्ताः पञ्चमस्स्वरितः, षष्ठः प्रचयः, तृतीयखण्डे प्रथमद्वितीयावनुदात्तौ, तृतीयस्स्वरितः, चतुर्थः प्रचयः, एवंस्वरपूर्वं जपेत् । मानसजपे तु नैष नियमः । अथ मन्त्रस्य कूटत्रयाणां क्रमेणाग्निसूर्यसोममण्डलतेजोमयत्वमुपदिशति—प्रथमखण्डे क इति प्रथमवर्णस्य "को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेष्वि" ति कोशादग्निवाचित्वादाग्नेयं प्रथमकूटम् । तत्रत्यहृल्लेखा विन्दोरग्निमण्डलत्वात् । कामकलाया अरुणविन्दुरूपत्वञ्च विज्ञापितम् । द्वितीयखण्डे हेति प्रथमवर्णस्य "हकारस्सूर्यवाची स्यात् सकारश्चन्द्रवाचक"

इति स्मरणात्सूर्यवाचित्वेन सूर्यतेजोमयं द्वितीयकूटम् । अतएवात्रत्य-हृल्लेखाविन्दोस्सूर्यमण्डलात्मकत्वात् । कामकलाया ऊर्द्ध्वविन्दुरूपत्वञ्च ज्ञापितम् । तृतीयकूटे सेति प्रथमवर्णस्य सकारस्य चन्द्रवाचित्वा-च्चन्द्रतेजोमयं तृतीयकूटम् । अत्रत्यहृल्लेखाविन्दोश्चन्द्रमण्डलात्म-कत्वात् । कामकलायास्सितविन्दुरूपत्वञ्चावगन्तव्यम् । एवं भावना जपेकार्येतिभावः । प्रथमखण्डे—ए—"यदेकादशमाधारं वीजं कोणत्रया-त्मक" मिति स्मरणान्मूलाधारत्रिकोणचक्रं तदारभ्येत्यर्थः । अग्नि-तेजोमयं प्रथमकूटं हेति सूर्यात्मकानाहतचक्रपर्यन्तं विभाव्यम् । सूर्यमयं द्वितीयकूटन्तु सेति चन्द्रात्मकाज्ञाचक्रपर्यन्तं विभाव्यं चन्द्र-मयं तृतीयकूटन्तु सकलह्रीतिललाटान्तं विभाव्यं तत उपरि विन्द्वर्ध-चन्द्ररोधिनिनादनादान्तशक्तिव्यापिकासमनोन्मनीनां दीपचन्द्रवि-द्युत्सूर्यतेजोमयं तत्तदाकारं भाव्यमिति सूचितम् ।

तच्चेत्थं—तृतीयखण्डे सकलेति त्रीणि ह्रीमित्यत्र हर द्वे ईं अस्मिन्नीङ्कारे त्रिकोणं पुनस्तिर्यगुपरि विन्दुद्वयं तदूर्द्ध्वमेको विन्दुरेवं चत्वार्याहृत्य नवभिर्वर्णैर्विन्द्वादिनवकं वोधयति स चन्द्रस्तस्य मण्डला-कारत्वाद्विन्दुस्तस्य स्थानन्तु "अजपामन्त्रोपासने मूलाधारस्वाधिष्ठान-मणिपूरानाहत विशुद्ध्याज्ञाचक्रेषु गणेशब्रह्मविष्णुरुद्रजीवात्मपरमा-त्मनां स्थानविधानात्सकारस्य परमात्मवाचित्वादाज्ञाचक्रोपरि ललाट-मद्ध्यं तस्य दीपवद्रूपं "अहं विश्वं भुवनमभ्यभवां सुवर्णज्योति" रिति श्रुतेः । क कवर्णस्य शिरोवाचित्वात्तस्य विन्दोश्शिरोऽर्ध-चन्द्रः । कान्त्याऽकृत्याचायमन्वर्थः । अस्य स्थानन्तु ललाटमध्योपरि ।

इतःपरं वक्ष्यमाणरोधिन्याद्युन्मनान्तानां क्रमादुपर्युपरि ब्रह्म-रन्ध्रान्तं ज्ञातव्यम् ।

ल—रोधिनी ला आदान इति धात्वर्थयोगेन पूर्वगततेजोनाद-ग्राहकत्वाद्रोधिनीति गृह्यते । सा च शक्तिरूपत्वात् त्रिकोणाकारा—

"लः खण्डने त्रिष्वदाने स्त्रीनेन्दौ लवणे तु लम्"

इति कोशाल्लवर्णस्य चन्द्रवाचित्वाच्चन्द्रिकाकान्तिः । ह्रीं तत्र हनादः हकारस्य "हकारोन्त्यकलारूप" इति स्मरणाद्विसर्गरूपत्वेन विसर्गस्य चोर्ध्वाधोभागे विन्दुद्वयं तत्संबन्ध्युत्तरे चैकारे खेति ग्रन्थलिपि-विन्यासे प्रसिद्धम् ।

अत्र मायावीजावयवत्वेन किञ्चिद्भेदोऽस्ति—अतस्तिर्यग्विन्दु-द्वयं तन्मध्यवर्तिन्यूर्ध्वमेका रेखा चेत्येवं रूपः "हं क्लीवमस्त्रमुखयोः क्वणिते मणिरोचिष्वि" ति कोशाद्धकारस्य क्वणितरत्नवाचित्वान्नादः पद्मरागप्रभ इत्यर्थः ।

र—नादान्तः उक्तहकारार्थस्य नदस्य रः क्षयोऽन्तः नादान्त-इत्यर्थः । रवर्णस्य क्षयवाचित्वात् ।

"रः पावके हरौ कामे क्षयवज्रशयेष्वृतौ"

इति कोशात् । किञ्च रवर्णस्याग्नेयशक्तिरूपत्वात्त्रिकोणरूपत्वाच्च वामभागस्थविन्दुसहितसीरवदाकृतिर्विद्युत्प्रभश्च । ईकारावयवतिर्य-ग्विन्दुद्वये वामविन्दौ त्रिकोणांगैकरेखासमेता शक्तिः । ईकारस्यैक-विन्दुस्तदूर्ध्वंत्रिकोणरूपा व्यापिका समनानामोऽर्ध्वाधोविन्दुद्वयसहित-

रेखा। तच्च ईंकारे विन्दुद्वयं त्रिकोणांगैकरेखा चेति ग्राह्यम्। उन्मनी तु विन्दुस्तदूर्ध्वैकरेखारूपा। तच्चेङ्कारस्थोर्ध्वविन्दुस्त्रिकोणांगैकरेखा-समेत इत्यवगन्तव्यम्। ततो महाविन्दुः। अत्र शक्त्यादि चतुर्णामपि ईङ्कारस्थतुरीयावयवरूपतृतीयविन्दोस्सूर्यतेजोमयत्वात् द्वादशसूर्यतेजो-रूपत्वम्। महाविन्दुस्तु सर्वातीतइत्यर्थः। उक्तञ्चेदं योगिनीहृदय-चक्रसङ्केतादिसमाहृतवरिवस्यारहस्ये—

"मध्ये फालं विन्दुर्दीप इवाभाति वर्तुलाकारस्तदुपरि मतोऽर्धचन्द्रोऽन्वर्थः कान्त्या तथाऽकृत्या"।

अथ रोधिनी तदूर्ध्वं त्रिकोणरूपा च चन्द्रिका कान्तिर्नादस्तु पद्मरागवदण्डद्वयमध्यवर्तनीव सिरा

नादान्तस्तडिदाभस्सव्यस्थितविन्दुयुक्तलांगलवत् तिर्यग्विन्दु-द्वितये वामोद्गच्छत्सिराकृतिश्शक्तिर्विन्दुत् गच्छत्र्यश्राकाराऽथ व्या-पिकाप्रोक्ता।

ऊर्ध्वाधोविन्दुद्वयसंयुतरेखाकृतिस्समना सैवोर्ध्वविन्दुहीनो-न्मना तदूर्ध्वं महाविन्दुश्शक्त्यादीनान्तु वपुर्द्वादशरविकान्तिपुञ्जाभ-मिति।

किञ्च तृतीयखण्डे कलाः विद्यावर्णास्ताभिस्सहिता सकला उपर्युपरि मालामणिवत्सम्मिलिता ह्रीं विद्येत्यर्थः। उक्तञ्च—

"प्रलयाग्निनिभं प्रथमं मूलाधारादनाहतं स्पृशति।
तस्मादाज्ञाचक्रं द्वितीयकूटन्तु कोटिसूर्याभम्॥

तस्माल्ललाटमद्ध्यं तार्तीयं कोटिचन्द्राभम् ।
मालामणिवद्वर्णाः क्रमेण भाव्या उपर्युपरि ॥" इति ।

एवं मन्त्रजपे भावनामुक्त्वा नित्यजपसंख्यामुपदिशति ।

द्वितीयखण्डे हसकेति—"हकारोऽन्त्यकलारूपो विमर्शाख्य-प्रकीर्तित" इति तन्त्रे स्मरणाद्धकारो विन्दुद्वयरूपः । सकारस्य चन्द्रवाचित्वात्तस्य विन्दुरूपत्वादेको विन्दुः । ककारस्य "कं ब्रह्मे-त्युपासीते" ति श्रुत्या कस्य ब्रह्मवाचकत्वादेकत्वसङ्ख्या । तथा च विन्दुत्रयसहितमेकाङ्कञ्च भवति । अङ्कानां वामतो गणनमिति कात्या-यनवचनात्सहस्रसङ्ख्येत्यर्थः । सहस्रजपासम्भवे सति पक्षान्तरमुप-दिशति—हलेति । हकारेण विन्दुद्वयं लस्य त्रिभुवनलक्षकत्वेन त्रित्व-सङ्ख्या । तथा च विन्दुद्वयं त्र्यङ्कं च भवति शतत्रयमित्यर्थः । तत्रा-प्यशक्तस्य पक्षान्तरमनेनैवोपदिशति—हलेति

हकारस्य विन्दुद्वयं लस्य पृथ्वीवीजत्वादेकत्वसङ्ख्या च । तेन बिन्दुद्वयमेकाङ्कञ्च भवति शतसङ्ख्येत्यर्थः । तथा च सहस्रत्रिशत-शतसङ्ख्याका ह्रीं विद्येत्यर्थः ।

तच्चोपबृंहितं ब्रह्माण्डपुराणे—विद्यां जपेत्सहस्रं वा त्रिशतं शतमेववे"ति—अथ मन्त्रसिद्ध्यर्थं चतुरंगपुरश्चरणमुपदिशति—तत्रादौ जपसंख्यामाह । हसकेति—हकारेण बिन्दुद्वयं हंसविद्यायां सका-रस्य परमात्मवाचकत्वाद्धमित्यस्य जीवपरत्वात् । वस्तुतो जीवपर-स्योरेकत्वेन "शिव एव सदा जीवो जीव एव सदा शिव" इति

श्रुतेः स्तद्वाचकयोरप्येकत्वसम्भवाद्धंमिति त्रिविन्दुरूपम् । स इति तस्यापि त्रिविन्दुरूपत्वं "हंस हंसेति यो ब्रूयाद्धसो नाम सदाशिव" इति श्रुतेः । द्राविडेषु ग्रन्थलिपिविन्यासेऽपि त्रिबिन्दुरूपाकारदर्शनाच्च सकारेण विन्दुत्रयं गृह्यते । कस्याग्निवाचित्वात्त्रित्वसंख्या लक्ष्यते । आहत्य पञ्च विन्दवः त्रित्वसंख्याङ्कं च भवति तेन लक्षत्रितयमित्यर्थः । ततो हकारस्य "हं क्लीवमखमुखयोः कणिते मणिरोचिषी"ति कोशात्कणितवाचकत्वेन "जपशब्द" इति धात्वर्थयोगाज्जपो गृह्यते । एवञ्च हसकहं त्रिलक्षसंख्याक जपः । तस्य लः खण्डितं "लः खण्डने त्रिष्वदान" इति कोशात् खण्डनवाचित्वात्पुरश्चरणमन्त्रसंख्यां भागीकृत्येयद्भिर्दिनैरियत्संख्याकजपं करिष्यत इति निश्चयो यस्यास्साह्वीं विधेत्यर्थः । उक्तञ्च रत्नाकरे ।

"त्रिलक्षं प्रजपेद्विद्यां तद्दशांशं यथाविधि ।
जुहुयान्मधुराक्तैश्च कुसुमैर्ब्रह्मवृक्षजैः ॥
तर्पयेत्तद्दशांशञ्च गन्धपुष्पाक्षतादिभिः ।
शुद्धैर्नदीजलैः प्रातस्सक्षीरैर्मन्त्रवित्सुधीः ॥
स्वाहान्ते जुहुयान्मन्त्री तर्पयामि नमस्तथा ।
तद्दशांशं ब्राह्मणानां भोजनं षड्रसैर्युतम् ॥"

3 ल
30 ह
3 ह
300 ...
30 ...

इत्यादिना—एतत्त्रिलक्षजपविधानमुत्तमोत्तमाधिकारिणामेव । मध्यमानान्तु सारसंग्रहमन्त्रमहोदधिविधानं षोडशद्वादश नवलक्षादिरूपम् । कनिष्ठाधिकारिणान्तु ब्रह्माण्डपुराणादावुक्तं षट्त्रिंशल्लक्षविधानं ग्राह्य-

मिति तु विज्ञेयम् । एवं जपसंख्यामुक्त्वा दशांशहोमादिविधिं दर्शयति—तृतीयखण्डे सकलेति—सकारस्य चन्द्रवाचित्वादेकोबिन्दुः कस्य ब्रह्मवाचित्वादेकत्वसंख्या दशेत्यर्थः । ल पृथ्वीबीजत्वादेकत्वसंख्याङ्कं दशनामकमित्यर्थः । ह्रीमग्निकार्यं त्रिंशत्सहस्रसंख्याकहोमः । "ह्रीङ्कारकुण्डाग्निशिखे"ति ह्रीङ्कारस्याग्निकुण्डत्वोपपादनात् । किञ्च तद्दशांशं ह्रीं जलकार्यं त्रिसहस्रसख्याकतर्पणं ह्रींकारस्य "ह्रींकारार्णवकौस्तुभेति "ह्रींकारदीर्घिकाहंसी"त्यर्णवत्वदीर्घिकात्वोपपादनाच्च । किञ्च तद्दशांशं ह्रीं त्रिशतसंख्याकब्राह्मणभोजनं ह्रींकारस्य "ह्रीङ्कार दुग्धाब्धि सुता" "ह्रीङ्काराध्वरदक्षिणे"ति च दुग्धाब्धित्वाऽध्वरत्वोपपादनाद्दुग्धस्याहारसाधनत्वाद्विप्रभोजनस्याध्वरसाम्याच्च । अथ होमद्रव्यञ्चोपदिशति—हसकहलेति—हेन मन्त्रजपेन स तस्यामृतबीजत्वात्त्रिमधुराक्तैरित्यर्थः । कं ब्रह्माणं हलते स्वदेवतात्वेन गृह्णातीति हल ग्रहण इति धातोः । कहलः ब्रह्म वृक्षः पलाशइत्यर्थः । तस्य ह्रीमव्ययं "ह्रीङ्कारसुमनोमाध्वी"ति तस्य सुमनस्त्वोपपादनात्कुसुमैरित्यर्थः । तथाच समन्त्रकत्रिमधुराक्तपलाशकुसुमैरित्यर्थः । प्रथम खण्डे—के वह्नौ ह्रीं देवीमावाह्य ए—प्रातः काले—

"एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ ।
व्योम्न्येकादशसंख्यायां दिनादौ मणिकुट्टिमे" ॥

इति कोशात् एकारस्य दिनादिमभागवाचित्वात् । ईल ईर प्रक्षिपेत्यर्थः । अथ तर्पणद्रव्यमुपदिशति—द्वितीय खण्डे—हसकेति—हकारेण

सुगन्धीनि पुष्पाणि हस्याकाशबीजत्वात्। ककारेणाक्षताः सकारेण क्षीरं तस्य सुधाकरात्मत्वात् । कस्य को ब्रह्मे"त्यारभ्य "सितवर्णे वसौ द्युताविति कोशात्सितवर्णवाचित्वाल्लक्षणया गृह्यन्ते । हकारेण रत्नानि गृह्यन्ते हकारस्य मणिकान्तिवाचित्वात् लकारेण सुगन्धीनि कुङ्कुमचन्दनादीनि गृह्यन्ते लस्य पृथ्वीबीजत्वात् । एतेषां ह्रीमव्ययं ह्र हरणं संश्रयणं ई प्रापणं सम्मेलनमित्यर्थः । प्रथमखण्डे—ए—जलं एकारस्य जलवाचित्वात् । तेन टालोपश्छान्दसः ह्रींमव्ययं परदेवतायाः के—वक्त्रे कस्य दत्तात्रेयभाष्ये मुखार्थत्वोपपादनात् । ईल प्रक्षिप तर्पयेत्यर्थः । अथ भोजनद्रव्यं दर्शयति हसकेति—हकारेणान्नं भोज्यमुच्यते हस्यादित्यवाचित्वेन "आदित्यो वा अन्न"मिति श्रुतेः । सकारेण क्षीरादिपेयमुच्यते । सस्य सुधाकरात्मकत्वात् । ककारेण शष्कुल्यपूपादि खाद्यमुच्यते । कस्याग्निवाचकत्वेन कठिनसाधनत्वात् । "यत् कठिनं तत्तेज" इति श्रुतेः । हकारेण जलांशं चोष्यमाम्लिकताक्रिकादिव्यञ्जनमुच्यते । हस्य वरुणवाचित्वात् । लकारेण तेमनादिकं लेह्यमुच्यते लस्य पृथ्वीबीजत्वात् । एतेषां ह्रीं ह्रीर्लज्जा सङ्कोच इत्यर्थः । तां मिनोति नाशयतीति ह्रीं अव्ययं समृद्ध्येत्यर्थः । के - ब्राह्मणाग्नौ ए - दिनपूर्वभागे ह्रीं — परदेवताबुद्ध्या "ब्राह्मणो वै सर्वादेवता" इति श्रुतेः । ईल प्रक्षिप । तथा च भोज्य पेय खाद्य चोष्य लेह्य समृद्ध्या ब्राह्मणान् देवी बुद्ध्या भोजयेत्यर्थः । एतच्च ब्राह्मणभोजनं त्रिशतीनामभिस्तत्रोक्तविधानेनैव कार्यमिति रहस्यम् । एवं कृतस्य फलमाह सकल ह्रीं - ऐहिकामुष्मिक-

समस्ताभीष्टसमृद्धिर्भवतीत्यर्थः । एवं विद्यानित्यजपविधौ प्रसङ्गात्पुरश्चरणविधिरप्युक्तः ।

इति पुरश्चरणविधानम् ।

## अथ समस्तशब्दार्थात्मकत्वं दर्शयति तत्र नादात्मकत्वम् ।

विद्यादेवतयोर्वाच्यवाचकयोरभेदात्समस्तशब्दार्थोभयात्मकत्वात्—

"पुरुच्येषा विश्वमातादिविद्या" "अहं ब्रह्मस्वरूपिणी मत्तः प्रकृति पुरुषात्मकं जगत्"

"मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥"

इत्यादि श्रुतेः । समस्तशब्दार्थोभयात्मकत्वे निरूपणीये तत्र तावच्छब्दात्मकत्वन्निरूपयति – प्रथमखण्डे – के – सप्तमी कायतीति कः "कै शब्द" इति धातोः कप्रत्ययः । तस्मिन् शब्दे "विष्णावाहतशब्देब्धा" वित्युक्तकोशाच्च नादरूपे "त्रीणि पदानिहिता गुहा नेंगयन्ति चत्वारि वाक्परिमिता पदानि तुरीयं वाचो मनुष्यावदन्ती" त्यादि श्रुत्या च मूलाधारात् ब्रह्मरन्ध्रान्तमाविश्य स्थितनाद इत्यर्थः ।

यद्वा योगशास्त्रोक्तक्रमेणाज्ञाचक्रोपर्याकाशचक्रे सुषुम्नामार्गे चित्रमुद्राविधानेन नवविधो नादः किमि किमि घण्टा मृदङ्गमेघभेरी नादादिरूपः श्रूयते तद्रूपे वा ।

यद्वा शिरसि सदा ध्वन्यमानप्रणवनादे वा ।

"आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्या ॥"

इति वचनात् । यद्वा हृल्लेखान्त्ये श्रूयमाण नवविधरूपे नादे—

"हृल्लेखायास्स्वरूपन्तु व्योमाग्निर्वामलोचनम् ।
विन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः
व्यापिका समनोन्मन्य" इति द्वादशसंहतिः ।
"विन्द्वादीनां नवानान्तु समष्टिर्नाद उच्यत ॥"

इति वरिवस्यारहस्योक्तेः । एवं विधसमस्तनादेपि ए एकारस्य तेजोवाचित्वाज्ज्योतिर्मयीं ह्रीं चिन्मयीं परां देवीं ईळ ईड स्तुहि ध्यायस्वेत्यर्थः । ळडयोरभेदादीडस्तुताविति धातोर्लोण्मध्यमः परस्मैपदित्वं छान्दसम् ।

अथास्याः वर्णात्मकत्वमुपदिशति—हसकेति – हः अत्र अकारस्य सूक्ष्मरूपेण सत्वात् "हकारोऽन्त्यकलारूपो विमर्शाख्य प्रकीर्तित" इति वचनाद्धकारस्य विसर्गरूपत्वाच्चाकारादिविसर्गान्ताः षोडशस्वराः प्रत्याहारन्यायसिद्धाः । स चन्द्रः । सवर्णस्य सोमवाचित्वात् षोडशकलामय इत्यर्थः । कः लक्षणया पञ्चविंशति कादिस्पर्शाः पञ्चवर्गा इत्यर्थः । हः मकारात्मकः । अनुलोमप्रतिलोमेन

द्वादशकलामयश्च सूर्यः । हस्य सूर्यवाचित्वात् । लः ळयोरभेदात् ळः । लक्षणया यकारादि ळकारान्ताः । अजहल्लक्षणया क्षकारस्याप्यत्रसत्वाद्दश वर्णाः ह्रीं दशकलात्मकाग्निरित्यर्थः । ह्रींकारस्य तेजोमयत्वात् । तथा च सोमसूर्याग्निमयस्वरस्पर्शान्तस्थोष्मरूपमातृकामयी विद्येत्यर्थः ।

तथा चोक्तं शारदातिलके—

"एषु स्वरास्स्मृतास्सौम्याः स्पर्शास्सौराश्शुभोदयाः ।
अग्नेया व्यापकास्सर्वे सोमसूर्याग्निदेवताः ॥
स्वराः षोडश विख्याताः स्पर्शास्ते पञ्चविंशतिः ।
तत्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ॥
व्यापका दश ते कामधेनुधर्मप्रदायिन ॥" इति

सकल ह्रीं सर्वभाषावर्णमयीं चतुःषष्टिवर्णरूपाञ्च तथा शीक्षोक्तेः । ईडेति पूर्वेण सम्बन्धः ।

## ॥ वीजमन्त्ररूपम् ॥

अथास्या विद्यायाः वर्णसमुदायरूपवीजमन्त्रविशेषरूपत्वं च दर्शयति—तत्र वाग्भवकूटे वाग्भववीजं कामकलावीजं कामराजवीजं मायावीजञ्च दर्शयति "को विधिरेकारो हरि रकार ईशः स्तवार्थमीडपदं द्विस्वरमध्यगतस्य डकारस्य लकार आदेश" इति वरिवस्यारहस्ये सगुणार्थोक्तरीत्या एकारान्ते श्रूयमाणाकारे एकारे योजिते 'ऐ' इति सिद्ध्यति—तत्र मायावीजस्थ विन्दोरनुषंगात् 'ऐं' इति

वाग्भववीजम् । तथा ईकारे पूर्ववद्विन्द्वनुषंगे सति कामकलावीजम् । ककारे लकारं संयोज्य ईकारे योजिते सति कामराजवीजम् । माया-वीजन्तु स्पष्टमेव । अत्र ईमित्यक्षरेणैव श्रीवीजञ्च वोद्धव्यं—

"ई च श्रीरपि लक्ष्मीश्च भूतिश्चेति चतुष्टयी।"

इति वीजरत्नकोशादीकारस्य श्रीवीजपर्यायनामत्वग्रहणात् ।

द्वितीये कामराजकूटे कामराजहंसप्रणवशक्तिवीजादीनि दर्शयति—ककार लकार मायवीजस्थैंकाराणां योजनात्कामराजवीजं भवति । हश्च सश्च हसौ, तादृशौ कौ हसशब्दौ । तत्र हश्च लश्च हलौ व्युत्क्रमेणविन्दुविसर्गवर्णौ यस्यास्सा च ह्रीश्चेति समासः । लकारस्य चन्द्रवाचित्वेन विन्दुरूपत्वाद्धकारस्य विसर्गरूपत्वाच्च हंस इत्यजपा-रूपिणी ह्रीं विद्येत्यर्थः । हंस इति पदद्वयस्य जीवात्मपरमात्मरूपत्वा-ज्जीवपरयोरन्योन्याभेदसिद्धये पदद्वये विनिमयीकृते सोऽहमिति भवति । तत्र हेयांशत्यागेन लक्षणया चात्मैक्यवत्तद्वाचकेऽपि हकार सकार गलने सति ओमिति त्रिबिन्दुरूपः प्रणवस्सिद्ध्यति । प्रणव-रूपिणी विद्येति तात्पर्यम् । प्रणवस्याकारोऽकामकारात्मकत्वाद्धंस-मन्त्रीयसकारे ओंकारं संयुज्य तत्रत्य हकारं विसर्गरूपेण तत्रैव योजिते 'सौ'—रिति शक्तिवीजम् अत्रैव हकारे ओंकारे योजिते हौ-मिति प्रासादजीजम् । कामराज कामकला मायावीजञ्च पूर्ववत्स्पष्टम् । अत्र हंस इति पराप्रासादमन्त्रः सोहमिति प्रासादपरामन्त्रश्चोक्तो वेदितव्यः । तृतीयकूटे—सकारे पूर्वखण्डसविसर्गैकारे योजिते

सौरिति शक्तिवीजम् । ककार लकार मायास्थेंकाराणां सम्मेलने सति कामराजवीजम् । कामकलामायावीजञ्च स्पष्टम् ।

सकलेति—सः चन्द्रवाचित्वाद्बिन्दुः । विन्दुसहिता कला तुरीयस्वररूपा ह्रीं—हकाररूपविन्दुद्वयसहितरवर्णरूपत्रिकोणाकारे ईकारे विन्दुयुक्तत्वाच्छुद्धमायावीजरूपिणी सार्धत्रिवलयाकाररूपिणी कुण्डलिनी शक्तिरित्यर्थः । अत्र शुद्धमायावीजात्मकश्रीवीजस्य कामराजवीजस्य च वाहुल्याच्छ्रीविद्येति, कामराजविद्येति महाविद्येति च प्रसिद्धिः ।

"या द्युतिर्नाम सावित्री शक्तिः पूर्वमिहोदिता ।
तस्या अपि विजानीहि वीजं व्यञ्जनमादिकम् ।।
आद्यस्वरयुतं वा तद्विकल्पादवधारय । "

इति शिवागमरहस्यवचनात्, ककारस्य सावित्री वीजत्वात्तस्य चात्र विद्यायां प्रथमाक्षरत्वेन सत्वात्सावित्रीमयीयं विद्येति च गायत्र्या अग्निमुखत्वादत्रापि कस्याग्निवाचित्वादग्निमुखीगायत्रीति च प्रसिद्धिः । अत्र कूटत्रयोक्तवालावीजत्रयेपि क्रमेण प्रत्येकं द्वितीयकूटस्थ हकारे योजिते "हैं हक्लीं—हँसौ" रिति त्रिपुरावासिनी विद्या भवति । तत्र हूसेति योजनां त्रिपुराश्रीविद्या भवति मायावीजाद्रेफमाकृष्य तत्र हसरेति योजना त्रिपुरादेवी विद्या भवति । उक्तवीजत्रयेपि हसर कलानां पञ्चवर्णानां योजनात्रिपुरावासिनी सिद्धा विद्या भवति ।

प्रथमक्रूटे ईलेत्यत्र "द्विस्वरमध्यगतस्य डकारस्य लकारआदेश" इति स्मरणाल्लस्य डत्वरूपत्वाद्धसरकलडानां षण्णां योजनाच्छ्री-त्रिपुरांबिका विद्या भवति—एव—मै—मी—मौः—हैँ—स्नं—हँ—स्रीं—हँ—स्रौः ह्स कलरडीमित्यादि—

हँ—सँ—रँ क्लीमित्यादि । "शुद्धविद्या च बाला च द्वादशार्धा-मतङ्गिनी" त्याद्यनेकविशिष्टमन्त्राणां स्वांगप्रत्यक्षाक्षरेणान्येषां स्वगत-मातृकावर्णविशेषेण च प्रकाशयितृत्वादियं श्रीविद्यासप्तकोटिमहामन्त्र-रूपिणीत्यर्थः ।

---

## ॥ चतुर्वेदात्मकत्वम् ॥

अथ चतुर्वेदात्मकत्वं दर्शयति—प्रथमखण्डे—क—अग्निं अग्लोप-श्छान्दसः ए—अकारवाच्ये यज्ञे अकारस्योदाहृतकोशादिज्यावाचि-त्वादील ईडेति ह्रीं देवमृत्विगादिमिति भावः । तथाच "अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विज" मिति ऋग्वेदादिमवाक्यं दर्शितम् । "इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवस्सविता प्रार्पयतु श्रेष्ठतमाय-कर्मण" इति यजुर्वेदादिमवाक्यं दर्शयति—ए—इषे ऊर्जे एकारस्य तेजोजलवाचित्वात्त्वेति शेषः । क इति वायवः । उपायवश्च ए स्थ कस्य वायुवाचित्वादेकारस्य सान्निध्यवाचित्वाच्च "ए—दुःखभावने कोपे प्रत्यक्षे सन्निधावपी" ति कोशात् । ह्रीं—सर्वतेजोमयस्सविता देवः ईल प्रार्पयतु प्रेरयतु ए—यज्ञे श्रेष्ठतमे कर्मणीत्यर्थः ।

"अग्न आयाहि वीतय" इति सामवेदादिमवाक्यं—क—अग्ने ! कवर्णस्याग्निवाचित्वात् । ईल ईर अयाहीत्यर्थः । "शं नो देवीरभीष्टय" इत्यथर्ववेदादिमं वाक्यम् । कं शं सुखं अभिष्टये ए ह्रीं हे अब्देव्यः इल भवन्त्वित्यर्थः ।

## ॥ वेदांगार्थः ॥

अथ वेदांगानि शास्त्राणि दर्शयति—तत्र शीक्षा "शीक्षां व्याख्यास्यामः वर्णस्वरो मात्राबलं साम सन्तान इत्युक्तश्शीक्षाऽध्याय" इति । कः ककारादिवर्णनिचय अकारादिवर्णनिचयश्च क् अः इति छेदात् ए स्वरः "इगध्यन" इति धातोर्निष्पन्नः । "सार्वधातुकार्धधातुकयो"रिति गुणः "निपातत्वादेकाजनाङि"ति प्रकृतिभावः । ई मात्राबलञ्च "इण् गताविति" धातोर्निष्पन्नः । ल सामसन्तान इति च "लीङ् श्लेषण" इति धातोर्निष्पन्नः । ह्रीमिति—शीक्षाध्यायः ह्रीं कारस्य सर्वार्थघटकत्वात् ।

## ॥ व्याकरणम् ॥

अथ व्याकरणं—क कू अ इत्यनयोर्विलोमेन प्रत्याहारे सति अक् इति सिद्ध्यति । अनेन "अइउण् ऋऌक् इति सूत्रद्वयं ज्ञापितम् । ए इत्यनेन "ए ओङ्" "ऐ औच्" इति सूत्रद्वयं ज्ञापितम् । एवं 'ई' इति वर्णस्य चतुर्थवर्णत्वाच्चत्वारि लवर्णस्य पार्थिवत्त्वादेकं तथा च चतुर्दश ह्रीं सूत्राणि "सूचनात्सूत्र" मिति न्यायान्मायावीजस्य सर्वसूचकत्वादेवं माहेश्वराणि चतुर्दश सूत्राणि सूचितानि ।

## ॥ अथ छन्द उपदिशति ॥

क इत्येकाक्षरं पादमुक्ताख्यं छन्दो भवति । क ए इत्येवं द्व्यक्षरं पादमत्युक्ताख्यं छन्दः । एवं क्रमेणैकैकाक्षरवर्द्धितस्य षड्विंशत्यक्षरस्यैकपादस्योत्कृतिर्नाम छन्दो भवति । अत्र विद्यायां माया-बीजत्रयस्य प्रत्येकं पञ्चाक्षरत्वविवक्षणेन पञ्चदशवर्णानि गृह्यन्ते । अन्यानि कादीनि वर्णानि द्वादश आहत्य सप्तविंशतिवर्णानां सत्वात् षड्विंशतितमोत्कृतिर्नाम छन्दसोऽप्यन्तर्भूतत्वात्सर्वछन्दोमयी श्रीविद्येत्यर्थः । छन्दोनामादीनि च परिगणितानि श्रीकेदारान्तर्वाणिना यथा—

" आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक् छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतैः ॥
तदूर्ध्वं चण्डवृष्ट्यादि दण्डकाः परिकीर्तिताः ।
शेषा गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥
उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शक्वरी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृते ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिस्संकृतिश्चैव तथाति (भि) कृतिराकृतिः ॥
इत्युक्ताः छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् "॥ इति

---

## ॥ अथ निरुक्तम् ॥

निरुक्तं नाम वैदिकपदानां तत्तत्प्रकरणानुसारिभावार्थनिर्वचनरूपं वेदपदार्थनिघण्डुरूपञ्च । अत्र श्रीविद्यायास्सर्ववेदार्थसारसर्वस्वरूपत्वान्निरुक्तरूपत्वम् । "कामो योनि" रिति सांकेतिकपदवत्वान्निघण्डुरूपत्वञ्च स्वयमेव प्रकाशितमिति वेदितव्यम् ।

## ॥ अथ कल्पसूत्राणि ॥

"अथातो दर्शपूर्णमासौ व्याख्यास्यामः । प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणीयाग्नीनन्वादधाती" ति श्रौतसूत्राणि दर्शयति । अन्त्यखण्डे सकल ह्रीं—सस्य चन्द्रस्य कलाः पञ्चदशतिथिरूपास्तासां ह्रीं ह्र क्षयः ई वृद्धिः म् तत्प्राप्त्या दर्शपूर्णमासौ । पञ्च दश नित्यादेवताकपञ्चदशतिथिरूपपञ्चदशचन्द्रकलानां श्रीविद्यापञ्चदशवर्णानाञ्चैकरूपत्वात् । विद्यान्त्यवर्णस्य मायाबीजस्य दर्शत्वपूर्णिमात्वयोश्चन्द्रकलाक्षयवृद्धिरूपेण सम्भवात् ह्रीं दर्शपूर्णमासावित्यर्थः । अवृत्त्या कल कलयामो व्याख्यास्यामेत्यर्थः । तिङ्प्रत्ययलोपश्छान्दसः । विद्यावर्णानां तिथ्यात्मकत्वन्तु वासनासुभगोदयेपि दर्शितं "दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु । षोडशीति तु कला ज्ञेया सच्चिदानन्दरूपिणी"ति ।

चन्द्रज्ञानतन्त्रे च

"अन्तरग्नौ मधुस्रावं कुर्वतां शिशिरात्मनाम् ।
इष्टापूर्तादिकर्माणि फलन्ति किल कालतः ॥

अन्तः स्रावविहीनानां सदा सन्तप्तचेतसाम् ।
कर्माणि क्रियमाणानि कालो ग्रसति तत्क्षणात् ॥
कालकर्षणिकैवान्तः करोति मधु वर्षति ।
इति यो वेद तस्य स्याद्ब्रह्मरन्ध्रात्सुधास्रुतिः ॥
वैदेही जनयामास सरघा कालकर्षणी ।
अहोरात्रैरिमां विद्यां दशपञ्चभिरक्षरैः" ॥

इति । श्रुतिरपि—"जनको वैदेह अहोरात्रैस्समाजगामे" ति—"प्रातरग्निहोत्रं हुत्वे" ति । प्रथमखण्डे—ए—प्रातः काले—अग्नौ ईल जुहुधीत्यर्थः । तत आवृत्या ए—अग्निमीर प्रणीयेत्यर्थः । ह्रीं—अग्नीनील अन्वादधातीत्यर्थः ।

॥ अथ धर्मसूत्रं दर्शयति ॥

अथातस्समयाचारिकान् धर्मान् व्याख्यास्यामः । धर्मज्ञसमयः प्रमाणं वेदाश्च । चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्रा इति । प्रथमखण्डे—ई—इ—ई. इतिच्छेदः "इकारः फणरत्नार्चिष्वग्रतोर्थगुहार्थयो"रिति कोशादिकारस्याग्रतोर्थकत्वात् । ईकारस्य तत्प्रापकत्वादग्रतः प्राप्तोऽर्थः प्रथमपुरुषार्थो धर्म इति यावत् ।

तं लाति गृह्णातीति ईलः धर्मग्राही धर्मज्ञइत्यर्थः । तस्य ह्रीं समयस्सिद्धान्तो ह्रींकारस्य सिद्धान्तार्थकत्वन्तु गौतमसूत्रार्थनिरूपणे वक्ष्यते । तथा च धर्मज्ञसमय इत्यर्थः । कः तस्य धीर्द्युत्योर्वाचकत्वात् प्रमाणमिति गृह्यते ए—इत्यत्र प्रश्लिष्टाकारादियोजनेन ऐ मिति त्रयी-

मयार्थकत्वस्य कर्मकाण्डार्थे निरूपितत्वात् ऐं वेदाः चत्वारो वर्णा इति वर्णानां ब्रह्मणो मुखबाहूरुपादसम्भूतत्वात् । कः तस्य ब्रह्ममुखवाचित्वात्तज्जातो ब्राह्मणः ए--तस्य तेजोवाचित्वात् बाहुजातः क्षत्रियः ई तस्य गुह्यवाचित्वात् गूहनस्थानमूरुः तज्जातो वैश्यः लः पार्थिवत्वात्तस्य पादांशत्वेन तज्जातश्शूद्र इति ह्रीं धर्मसूत्रं दर्शितम् ।

॥ गृह्यसूत्रम् ॥

"अथ कर्माण्याचाराद्यानि गृह्यन्ते उदगयनपूर्वपक्षाऽह" इत्यादि गृह्यसूत्रार्थसारसंग्रहस्य कर्मकाण्डार्थे निरूपितप्रायत्वादत्र नोक्तम् ।

॥ ज्योतिषम् ॥

अथ ज्योतिषं दर्शयति--ए--व्योम्नीत्यर्थः । उदाहृतकोशात् कस्तस्य द्युतिवाचित्वान्महाज्योतिर्मण्डलमित्यर्थः । तत्र ह्रीं द्वादशराश्यात्मकज्योतिर्महाकालचक्रं तस्य द्वादशावयववर्णज्योतीरूपत्वात् । ईल परिवर्तत इत्यर्थः ह्रींकारस्य हकाररेफेकारास्त्रयस्तत्रत्यबिन्द्वादीनि नववर्णानि—

" हृल्लेखायास्स्वरूपन्तु व्योमाग्निर्वामलोचनम् ।
बिन्द्वर्धचन्द्ररोधिन्यो नादनादान्तशक्तयः ॥
व्यापिकासमनोन्मन्य इति द्वादशसंहतिः "

इत्युक्तरीत्या द्वादशवर्णात्मकत्वात् द्वादशः राशयो लक्ष्यन्ते । सूर्यस्य सकृद्द्वादशराशिपरिवर्तनेन"--को वत्सरो भवतीत्यर्थोऽपि द्वादशावय-

वमायाबीजस्यैकाकारत्वादेव सिद्धः । ह्रीं वीजस्य ह्रीतिपदविन्दुभेदेन द्वैविध्यादेव द्वादशराश्यात्मकद्वादशमासेषु षण्मासात्मकमयनद्वयं बोधितम् । ह्-तत्र भेदो र—अग्निवाचित्वात् त्रि—द्वौ द्वौ मासावेकै-कर्तुरिति न्यायादयनद्वयेपि त्रिरूपृतव इत्यर्थः । मासे दिनानि च ह्र—हर हवर्णस्याकाशवाचित्वेन तस्य वृत्ताकारत्वाद्विन्दुः ।

रस्याग्निवाचित्वात्त्रित्वसंख्या त्रिंशद्दिनानीत्यर्थः । तत्र ह्र द्वित्वसंख्या मासस्यापि द्विभेद इत्यर्थः । तत्कथं ई इति ईकारस्य गुह्यावाचित्वात् कृष्णः विन्दोश्चन्द्रमयत्वाच्छुक्लः पञ्चदशदिनात्मकशुक्ल-कृष्णपक्षावित्यर्थः । दिवसेप्यहोरात्रविकल्पाद्धोरेत्युपबृंहितन्यायवत् । ह्र—ह्—अहः ररात्रिरित्यहोरात्रमिति द्वैविध्यमित्यर्थः । तत्र घटिकाश्च पूर्वोक्तदिनसंख्यान्यायेन ह्रेति अहनि त्रिंशद्रात्रौ च त्रिंशदित्यर्थः । तत्र ह्रासवृद्धिस्तु ह्र—ह्रासः—ई—वृद्धिः—म्—माति निर्माति ह्रासो वृद्धिश्च भवतीत्यर्थः । अत्र हेति सूर्यः रेति रुधिरः । तेजोमयस्यैका-रस्योदाहृतकोशाद्घ्राणवाचित्वात्पञ्चसंख्यालाभात्पञ्चग्रहा उच्यन्ते चन्द्र सौम्य भृगु जीव शनैश्चरा इति । तत्रत्यानुस्वारस्य "अंशब्दो वक्र-वाक्येति दीर्घेऽञ्जलिनियोगयोः । सप्तस्वारान्तमाने च परंज्योतिषि च स्मृत" इति कोशाद्विज्ञानमोक्षकारकौ राहुकेतू गृह्येते । वक्र-वाक्यादिदीर्घत्वादिवाचित्वात् । एवं नवग्रहास्तत्र परिवर्तन्त इत्यर्थः । तथा परिवर्तने कदाचित्—ह्—सूर्यः—तं—र—आग्नेयत्वात् केतुः—ई—तस्य फणिवाचित्वाद्राहुः । एष राहुः केतुश्च तमोमय-त्वात्पृष्ठवच्छादयतीत्यर्थः । तथा ईकारोपरि विद्यमानविन्दुश्चन्द्रः ।

तमपि कदाचित्कदाचिद्ग्रसतीतिवच्छादयाति। सूर्यचन्द्रमध्यस्थावमृताशनावित्यर्थः। तदा लोके सूर्योपरागस्सोमोपराग इति च पुण्यकालव्यवहारः। एवमर्थान्तराण्यप्यूह्यानि अथ वारतिथिनक्षत्रसंख्याञ्च दर्शयति—द्वितीयखण्डे हः रविवारः। तस्यादित्यवाचित्वात् सस्सोमवारस्तस्य चन्द्रवाचित्वात्। कः कुजवारस्तस्याग्निवाचित्वात्। हः बुधवारस्तस्य हरिवाचित्वात्। लः गुरुवारः लाति गृह्णाति सर्वविद्यामिति ला आदान इति धात्वर्थयोगात् गुरुस्तद्वार इत्यर्थः। ह्रीति देवीस्थूलबीजत्वाद्देवीकारकश्शुक्रस्तद्वासर इत्यर्थः। तत्रत्यार्धमकारस्यार्थान्मन्दवार उच्यते शनैश्चरस्य सर्वग्रहोपरि स्थितत्वात्। "अं शब्दो वक्रवाक्येति दीर्घेऽञ्जलिनियोगयो" रिति कोशाच्च। अथ तिथयः तृतीयखण्डे सकलास्त्रयः ह्रींकारस्य द्वादशाहत्य पञ्चदशवर्णाः। बिन्द्वादीनां वर्णत्वन्तु "हृल्लेखात्रयसम्भूतैस्तिथिसंख्यैस्तथाक्षरै" रिति "भूमिश्चन्द्र" इत्यारभ्या "र्धबिन्दुश्च बिन्दुश्च नवार्णो मेरुरुच्यते" इत्यादिवचनात् सिद्धम्। तथा च पञ्चदशवर्णैः पञ्चदशकलात्मकप्रतिपदादितिथय उच्यन्ते। अथ नक्षत्राणि—अत्र श्रीविद्यामाया बीजत्रयाणां पञ्चाक्षरत्वविवक्षणात्पञ्चदशवर्णा अन्ये कादयो द्वादशाऽहत्य सप्तविंशतिवर्णास्तैस्सप्तविंशति नक्षत्राणि गृह्यन्ते। योगकरणादीनामुक्तार्थत्वेन गृहीतुं शक्यत्वादति विस्तरभयान्नेह लिख्यते। एवं ज्योतिषमुक्त्वा न्यायशास्त्रं गौतमसूत्रं दर्शयति।

## ॥ अथ गौतमसूत्रम् ॥

प्रमाण, प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्ताऽवयव, तर्क, निर्णय, वाद, जल्प, वितण्डा, हेत्वाभास, छल, जातिनिग्रह-स्थानानां तत्वज्ञानान्निश्रेयसाधिगम" इति गौतमसूत्रं तदत्र दर्शयति— प्रथमखण्डे क—कन्यते प्रकाश्यतेऽनेनेति कं "कनतेः क्विप्" सुलो-पश्छान्दसः । प्रत्यक्षानुमानोपमानशाब्दरूपं चतुर्विधं प्रमाणमित्यर्थः । ए ईयतेऽवगम्यत इति ए "इण् गताविति" धातुः "सार्वधातुकार्ध-धातुकयो" रिति गुणः । "निपात एका जनाङिति" प्रकृतिभावः । गत्यर्थानां ज्ञानार्थकत्वात् "एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ । व्योम्न्येकादशसंख्यायां दिनादौ मणिकुट्टिम" इति कोशाच्च । द्वादशविधं प्रमेयमित्यर्थः । एकारे प्रश्लिष्टाकारः अ—अव्ययं "अस्या-न्निषेधेप्यल्पार्थे" इत्यभिधानात्संशयइत्यर्थः । ई इट किट कटी, गतावित्यत्र प्रश्लिष्टोऽयमीधातुः । अस्मिन् कर्त्रर्थकौणादिके इप्रत्यये कृते—ई इति रूपं सिद्ध्यति । बहुलग्रहणान्नगुणेयङ्——तस्मादिष्ट-प्राप्त्यनिष्टनिवृत्तिश्च प्रयोजनमित्यर्थः । लः लूयतेऽदमित्थमिति खण्ड्यतेऽनेन निश्चीयत इति दृष्टान्तः । ह्रीमव्ययं हृञ् हरण इति धातुः । हृ परमतनिराकरणमर्थः । ई स्वमतप्रापणं म् निर्मिति-स्सिद्धान्त इत्यर्थः । द्वितीयखण्डे ह हन्ति गच्छत्यनुमितिं प्रापयतीति हः । हिण् गतौ पञ्चावयववाक्यरूपावयव इत्यर्थः । सस्यति परहेतुं निरस्यतीति सः षोन्तकर्मणीति स्यते क्विप् तर्कइत्यर्थः । कः कायते याथार्थ्येन व्यवह्रियत इति कायतेः क्विप् निर्णय

इत्यर्थः । हः क्वणितवाचिप्रमाणफलतत्त्वबुभुत्सोः कथारूपो वादः । लः जल्पः उभयपक्षसाधककथारूपः "लपशब्द" इति धातुः पलोपश्छान्दसः । ह्रीं स्वपक्षस्थापनाहीनाऽपरपक्षविदलनामात्रपर्यवसाना वितण्डा । ह्रींकारस्य मायावाचित्वात्तदर्थसम्भवाद्वितण्डेत्यर्थः । तृतीयखण्डे सः "स्रृ गता" विति धातोः क्विप् । सद्धेतुना निवार्यमाणत्वाद्धेत्वाभासः । कः छलं । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणात्मकं कनत्यर्थान्तरमेव प्रकाशयतीति तदर्थं सिद्ध्यति । ल—जातिः स्वव्याघातु कोत्तररूपा लस्य खण्डनवाचित्वात्तदर्थलभात् ह्रीं निग्रहस्थानं वादिनो विजयहेतुकं "हृञ् हरण" इति धात्वर्थात् सिद्ध्यति । एवं न्यायसूत्रषोडशपदार्थानपि ई प्रकाशयतीयं श्रीविद्या महत्तरेत्यर्थः ।

## ॥ सांख्यम् ॥

अथ सांख्यं दर्शयति—तन्मतं चेत्थं—प्रकृतिरचेतना स्वतन्त्रा कर्त्री पुरुषश्चेतनो निर्लेपः प्रकृतिपुरुषविवेको मोक्ष इति ।

प्रथमखण्डे कः पुरुषश्चेतनः कनति स्वयं प्रकाशत इति "को ब्रह्मात्माऽनि लार्काग्नी"ति कोशात् "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुष" इति बृहदारण्यकश्रुतेः "असङ्गोह्ययं पुरुष" इति श्रुतेश्च । ए—मूलप्रकृतिः । "यदेकादशमाधारं वीजं कोणत्रयात्मकं । ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यत" इति स्मरणात् "योनिश्च हि गीयत" इत्यादिसूत्राच्च । अचेतना कर्त्री प्रकृतिः ।

ह्री मायाकार्यं प्रपञ्चमस्य भुवनेश्वरीस्थूलबीजरूपत्वात् । म् माति निर्मात्रीति ह्रीं स्वतः कर्त्रीत्यर्थः । ईल तां प्रकृतिं तं पुरुषञ्च विविच्यावगच्छेत्यर्थः ।

## ॥ पातञ्जलयोगम् ॥

अथ पातञ्जलयोगसूत्रं दर्शयति "अथ योगानुशासनं" "योगश्चित्तवृत्तिनिरोध" इत्यादि आवृत्या ह्रीं चित्तवृत्तिं ह्रींकारस्य चिद्बीजत्वात् । ईल निरोधयेत्यर्थः । तन्निरोधने ए ईयन्ते साध्यन्त एभिरिति साधनानि "इण् गताविति" धातुः । क—तस्योक्तकोशेन वसुवाचित्वादष्टावित्यर्थः । यमनियमासनप्राणायामप्रत्याहारधारणाध्यान समाधय इत्यष्टावंगानि योग इत्यर्थः ।

## ॥ शिवसूत्रम् ॥

अथ शिवसूत्रं—"अथ चैतन्यमात्मे"ति ए—तदव्ययं प्रत्यक्षं चैतन्यमित्यर्थः । एकारस्योक्तकोशेन प्रत्यक्षवाचित्वात् "यत्साक्षादपरोक्षाद्ब्रह्मे"ति श्रुतेः । कं आत्मा—कस्यात्मवाचित्वात् ।

## ॥ अथ जैमिनिसूत्रम् ॥

"अथातो धर्मजिज्ञासा" चोदनालक्षणोऽर्थो धर्म इति ह्रीं धर्मस्तस्य ह्रींकारस्य "ह्रींकाराध्वरदक्षिणे" त्यादिनाऽध्वरत्वादिधर्मत्वोपपादनात्तमील ईर विजिज्ञासस्वेत्यर्थः । स च धर्मश्चोदनाभिहितोऽर्थ एव । चोदना नाम वेदोदीरिता लिङ्लोट् तव्यप्रत्ययादिघटितरूपा । अत्र एकारे पूर्वोक्तन्यायेन प्रश्लिष्टाकारबिन्दुयोज-

नात् ऐं वेद इत्यर्थस्तेषां कः विधिवाक्यार्थरूपः "कन दीप्तौ" "कैशब्द" इति च धातुः ।

## ॥ शक्तिसूत्रम् ॥

अथ शक्तिसूत्रं दर्शयति—"अथ चितिस्स्वतन्त्रा विश्वसिद्धिहेतु" रिति ह्रीं स्वतन्त्रा चितिः ह्रींकारस्य चित्प्रकृतिबीजरूपत्वात् के - ब्रह्मणि ब्रह्माण्डरूपवैराजे विश्वसिद्धावित्यर्थः । ए योनिः कारणं हेतुरित्यर्थः । तां चितिमील ईर विजानीहि स्वात्मरूपेणेत्यर्थः ।

## ॥ भक्तिमीमांसा ॥

अथ भक्तिमीमांसा शाण्डिल्यसूत्रं "अथातो भक्तिजिज्ञासा सा पराऽनुरक्तिरीश्वर" इति के—परमेश्वरे ए-भक्तिः ह्रीं - परानुरक्तिरूपा तामील जिज्ञासस्वेत्यर्थः ।

अथ ब्रह्मसूत्रं वैयासिकं दर्शयति—

"अथातो ब्रह्म जिज्ञासा - जन्माद्यस्य यतः—शास्त्रयोनित्वात्तु समन्वयादिति चतुस्सूत्री - ह्रीं - तत्र ह - संहारः हन्तीति "हन हिंसाया" मिति धातुः र - रक्षा रक्षतीति "रक्ष् रक्षण" इति धातुः ई - उत्पत्तिः "ई गताविति" धातुः सृष्टिस्थितिसंहारान् म् - माति निर्मातीति "माङ् मान" इति धातुः सर्वसृष्टिस्थितिसंहारकारणं ब्रह्मेत्यर्थः । ईकारस्य प्रणवार्थकत्वेन ब्रह्मवाचित्वात् ईल उक्तं तत् ब्रह्म ईर जिज्ञासस्वेत्यर्थः । के शब्दे शास्त्र इत्यर्थः । ए - योनिः कारणं शास्त्रयोनिर्ब्रह्मेत्यर्थः । तत्तु समन्वया-

दिति तत्तु ए - शास्त्रयोनित्वं के - ब्रह्मणि "कं ब्रह्मेत्युपासीते" ति श्रुतेः । ह्रीं समन्वयितत्वात् "हृञ् हरण" इति धातोर्हरणार्थकत्वेन वेदान्तवाक्यार्थानां ब्रह्मणि समाहृतत्वादित्यर्थः । ईक्षतेर्नाशब्द" मिति सूत्रं ईक्षतेः ए - अव्ययं प्रत्यक्षवाचित्वादेकारस्येक्षतेरित्यर्थः । एकारान्ते प्रश्लिष्टाकारो गृह्यते । अकारस्य निषेधवाचित्वान्नेत्यर्थः । ह्रीं - अशब्दं - प्रधानं ह्रींकारस्य प्रकृतेरपि वीजत्वात् । सूत्रं "आनन्दमयोभ्यासात्" कः कस्य सुखवाचित्वादानन्दमय ए- "इगध्ययन" इति धातोराम्रेडितार्थकत्वादभ्यासादित्यर्थः । एवं सर्ववेदशास्त्रसद्बीजभूतेयं परा श्रीविद्येत्यर्थः एवं शास्त्रार्थसारो दर्शितः ।

## ॥ अथ पुराणानि दर्शयति तत्र ब्राह्मम् ॥

प्रथमखण्डे कः ब्रह्मा—ए अकारवाच्ये सप्तमी इज्यादिकर्मणि निमित्ते विषये वा ह्रीं । चतुर्दशभुवनात्मकं पञ्चभूतमयं प्रपञ्चम् । भुवनेश्वरीवीजस्य भुवनात्मकत्वं तु दक्षिणामूर्तिसंहितायां घटार्गलपटल उक्तम् ।

"एकाक्षरेपि देवेशि! सन्त्यत्र भुवनानि तु" ।

इत्यादिना सामान्येन प्रतिपाद्य—

"व्योमवीजे महेशानि कैलासादि प्रतिष्ठितम्" ।

इति विशिष्योक्त्वा "अत एव महेशानि! भुवनाधीश्वरी स्मृते" त्युपसंहृतम् । तत्रैव "हकाराद्व्योम तुर्येण स्वरेणानिलसम्भवः" इत्यादिना प्रकारान्तरेणापि भुवनेशित्वं प्रतिपादितम् । तस्माद्धकारा-

व्योम—रादग्निः — ईकाराद्वायुः — विन्दोर्जलं — चतुस्समष्ट्या पृथिवीति पञ्चभूतात्मकमित्यर्थः । ईल कलयामास इति ब्राह्मणपुराणसारो दर्शितः ।

## ॥ अथ वैष्णवं पुराणं दर्शयति तत्र मात्स्यम् ॥

प्रथमखण्डे ए—विष्णुः के कल्पार्णवजले । कस्य समुद्रवाचित्वात् । ह्रीं वेदान्—असुरापहृतानित्यर्थः । "ह्रींकारवेदोपनिषदि"ति स्मरणात् ह्रींकारस्य वेदार्थबोधकत्वम् । ईल "इलस्वप्नक्षेपणयो" रिति धातोर्लिडर्थकत्वादुज्जहारेत्यर्थः । तथा च श्रीभगवतो नारायणस्य मत्स्यावतारकथा दर्शिता ।

## ॥ कूर्मावतारकथा ॥

अथ के समुद्रे सप्तम्यर्थः । स्थितं निमग्नमिति यावत् । ह्रीं भुवनमित्यर्थः । तस्य भुवनबीजत्वात् । एकारे प्रश्लिष्टाकारः कमठः "अकारो ब्रह्मविष्ण्वीशकमठेष्वि"ति नानार्थरत्नमालाभिधानात् । ए हरिः कमठरूपी हरिरित्यर्थः । ईल उद्धारेत्यर्थः । तथा च कूर्मावतारकथा दर्शिता ।

## ॥ अथ वराहावतारः ॥

एवं के समुद्रे ल ह्रीं लं—भूमिः तद्बीजत्वात् । ह्रीं—गोलं तथा च भूगोलमित्यर्थः । असुरापहृतसमुद्रमग्नभूगोलमिति भावः । ए—हरिः प्रकरणाद्वराहरूपी भगवानित्यर्थः ईल उद्धारेत्यर्थः । तथा च वराहावतारकथा दर्शिता ।

## ॥ अथ नरसिंहावतारः ॥

अथ द्वितीये खण्डे हसकः "क तव हरि" रिति प्रह्लादाभ्रे परिहासकः प्रकृते हिरण्यकशिपुः तस्य हादुत्तानाद्धठात्स्वाङ्कं हिरण्यकशिपुमाकृष्योत्तानीकृत्येत्यर्थः ।

"हं क्लीबमस्त्रमुखयोः कणिते मणिरोचिषि ।
परब्रह्मामन्त्रणयोः त्रिषु तूत्तानहास्ययोः" ॥

इत्यभिधानात् । लः "लूञ् छेदन" इति धातोः कर्तरि कप्रत्ययः । छेदकः स्वकरनखराग्रैरसुरहृदयप्रविदारक इत्यर्थः । अत एव ह्रीं तत्र हकारे मुखे रवाच्यं रुधिरं हिरण्यकशिपुहृदयाकृष्टसान्त्रमालं रक्तमित्यर्थः । ई—कोपः भ्रुकुटीकृतक्रोध इत्यर्थः । एतद्द्वयं माति वहतीति म् "मातेः क्विप्" । स्वकरनखराग्रविदारितासुरहृदयाकृष्टान्त्रमालारुधिरकलितक्रोधवक्त्रो नृसिंहो हरिरिति ह्रींकारस्य फलितोर्थः । ततस्तृतीयखण्डे "कल मद" इति धातोर्मद आनन्दः । सकलस्सानन्दः प्रह्लादइत्यर्थः । तस्य च सकलस्य जनस्य च ह्री लज्जा सन्तापसन्तानमनःकुण्ठता तां मिनोति नाशयतीति म् "मीञ् हिंसायां" मिनोतेः क्विप् माण्डूक्यादौ वीजमन्त्रतन्त्रेष्वप्येवं वहुशो व्याख्यानदर्शनात् । ह्रीं मनोमुकुलताविनाशनः प्रह्लादादिसर्वजनमनःसन्तोषकर इति तात्पर्यार्थः । प्रथमखण्डे एवं ह्रीं हरिं नृसिंहमूर्तिमित्यर्थः । ह्रींकारस्य विष्णुवीजत्वात् किञ्च परमात्मशक्तेरेवं पुंरूपं वैष्णवमपरं स्त्रीरूपं गौर्यात्मकमिति रुद्रहृदयादिशास्त्ररहस्यावगमाच्च ।

ए—अकारवाच्ये रणे कलहे सति तच्छत्रुविनाशार्थं के—चित्ते ईड स्तुहि—एवं नृसिंहावतारकथा दर्शिता ।

## ॥ वामनावतारः ॥

अथ प्रथमखण्डे एकारे प्रश्लिष्टाकारः "अस्यान्निषेधेप्यल्पार्थे" इति नानार्थरत्नमालाभिधानात् । अत्राल्पार्थवाची ह्रस्व इत्यर्थः । कः विष्णुः - अकारपूर्वो विष्णुर्वामनमूर्तिरिति यावत् । ए — अकार- सप्तमी । यज्ञे महाबलियज्ञशालायामित्यर्थः । ई ईयिवान् प्राप्तवा- नित्यर्थः । उक्तन्यायात् । स्वाभ्यर्थितमहाबलिप्रदत्तत्रिपदक्षितितल- प्रतिग्रहनिमित्तम् । लह्रीं लाय त्रिपदभूमानायेत्यर्थः । लस्य पार्थि- वबीजत्वात् ह्रीं हकाररेफेकाराः भूस्वर्गपातालवाचकाः । तस्य सर्व- भुवनवाचित्वात् । एषां समाहारस्त्रिलोकी तां मातीति म् मातेः क्विप् पदत्रयविन्यासात् त्रिविक्रमरूपी हरिरित्यर्थः । एतच्च "इदं विष्णुर्विचक्रमे त्रेधा निदधे पद"मिति श्रुत्युपबृंहितम् । एवं वामना- वतारकथा दर्शिता ।

## ॥ परशुरामावतारः ॥

अथ प्रथमखण्डे कः विष्णुः परशुरामइत्यर्थः । ए—अकार- सप्तमी अकारस्य रणवाचित्वाद्युद्धे ईल ह्रीमिति "द्विस्वरमध्यगतस्य डकारस्य ळकार आदेश" इति वचनात् — "इडावाग्गोद्युभूनाडच- इडास्या द्रुधपत्न्यपी" त्यभिधानात् । इडा येषामाधिपत्ये नास्तीति इडाः भूपाः अर्श आद्यच्प्रत्ययः । इ इडा ईडाः इ अव्ययं कुत्सि- तार्थकं "अकः सवर्णे दीर्घे" इति । कुत्सितभूपाः दुष्टभूपा इत्यर्थः ।

तेषां ह्रीं ह्रहरणं संहरणमित्यर्थः । तेन ई लक्ष्मीस्तां "ई दीप्ता" विति धातोश्शोभां वा माति वहतीति ह्रीं । दुष्टक्षत्रनिग्रहजनित-महावीर्यवान् श्रीपरशुराम इत्यर्थः । "अस्ति भवतीपरोऽप्रयुज्य-मानोप्यस्ती"ति महाभाष्यवचनादस्तीत्यर्थाच्चिरञ्जीवित्वादद्यापि विद्य-तइत्यर्थः । एवं भार्गवरामावतारकथा दर्शिता ।

## ॥ अथ रामावतारः ॥

अथ रामायणं – कः विष्णुर्दाशरथिः । ईल ह्रीं ईकारस्य "ईकारोऽब्जदले" त्यारभ्य "रसनायां शक्र चाप" इति कोशा-दिन्द्रधनुरित्यर्थः । प्रतिरूपकालङ्कारन्यायेनात्र । चित्रं शैवं चाप-मित्यर्थः । तस्य लः खण्डनं तस्मात् ह्रीं सीतादेवीं ह्रींकारस्य सर्व-शक्तिवाचित्वात् । ए – अकारसप्तमी । अकारस्याङ्कणवाचित्वा-त्कल्याणमण्डप इत्यर्थः । ईलेत्यावृत्यानु कृष्यते ईल ईर प्राप्तवानि-त्यर्थः । शैवचापभञ्जनपूर्वकं सीतादेवीं कल्याणमण्डपे विधिपुरःसर-मुपेयिवान् भगवाञ्छ्रीराम इत्यर्थः । अथ रावणापहृतसीताऽनय-नार्थं श्रीरामः केत्यावृत्यान्वीयते – के - समुद्रे उक्तकोशात् । ह्रीं महासेतुं अत्र तावत्तन्त्रेषु मन्त्राणां सेतुमहासेतु कुळिकादिसमेत-जपोऽतिशीघ्रफलसिद्धिप्रद इति दर्शनात् । सेतुः प्रणवः महासेतु-र्मायावीजं कुळिका तत्तन्मन्त्रभिन्नेत्यादिरपि दृश्यते । एवञ्च माया-वीजस्य महासेतुत्वदर्शनात् । कृत्वा लङ्कां तेन गत्वेति शेषः । ए - अकारस्य सप्तमी युद्धे द्वितीयखण्डे तत हसकस्य स्वतिरस्कारिणो रावणस्येत्यर्थः । हानि दशमुखानीत्यर्थः । तेषां लः खण्डनं तस्मा-

द्विलूयेत्यर्थः । ह्रीं सीतादेवीं सकल ह्रीं समस्तराज्यश्रियं च ईल प्राप्तवानित्यर्थः । श्रीपट्टाभिषेकपूर्वकं स्वश्रिया विजयश्रिया च राज्य-श्रियं सम्प्राप्तवानित्यर्थः । एतच्च ऋग्वेदे ऋग्द्वयेनोपबृंहितम् । एवं श्रीरामावतारकथा दर्शिता ।

## ॥ अथ श्रीकृष्णावतारः ॥

अथ भागवतं प्रथमखण्डे कः ब्रह्मा ए—अकारसप्तमी यज्ञादि धर्मनिमित्तं ह्रीं विष्णुं ईल ईड तुष्टावेत्यर्थः । अवृत्या के—क्षीरसमुद्रे ए—हरिः क्षीराब्धिवासी महाविष्णुः ई—अव्ययं कोपेन लह्री—लस्य भूदेव्याः ह्री लज्जा तां मिनोति नाशयतीति ह्रमिव्ययं मनः कुण्ठता-निवारणाय भूभारहृणार्थमिति यावत् । पुनश्चावृत्या ईल ह्रीं—ई—इत्या-दिशेषः ईकारस्य फणिवाचित्वात् । तत्सहितः बलभद्रसहितइत्यर्थः । ल ह्रीं—ले—भूमौ ह्रीं विष्णुः भूलोकविष्णुः श्रीकृष्ण इत्यर्थः । ए—अकारसप्तमी अन्तः पुरे वसुदेवगृहान्तर इत्यर्थः । कः यमः सर्वदु-ष्टानामन्तकः । ईल भविष्यमिति प्रतिजज्ञइत्यर्थः ।

“ ईर गतौ शब्दे चेति धातोराख्यातलोपश्छान्दसः । “ रस्य-कपिरकत्वादित्वाल्लत्वम् ॥

अथ द्वितीयखण्डे ह ! सत्यमाश्चर्यम् । उक्तप्रकारेण भगव-दवतारादित्यर्थः । सकहल ह्रीं—कं—दीप्तं तस्य द्युतिवाचित्वात् । हलं सीरमायुधं यस्य सः । कहलो बलभद्रः । तेन सहितः सकहलः सकहलश्चासौ ह्रीं कृष्णश्चेति सकहल ह्रीं बलरामसमेतश्रीकृष्ण इत्यर्थः । तृतीयखण्डे सकलानि सर्वमनांसि हरतीति सकल ह्रीं ।

सकलमोहनमायार्थीत्यर्थः । प्रथमखण्डे ईलेत्यत्र डकारस्य लत्वादेश-स्मरणात् ईकारस्य प्रश्लेपविवक्षया ई–इडेति छेदः इडाः गावः सन्त्यस्मिन्निति इडं "अर्शाद्यच्" गोकुलमित्यर्थः । इडे ह्री बाल्य-लौल्यात् पयोदधिघृताद्यपहरणक्रीडारूपव्रीडाकृत्यं म् माति करोति कुर्वन्नित्यर्थः । अथ किञ्च गोकालनकाले च कदाचिच्चतुर्मुखमोहनाय इड ह्रीं इडानां गोसहितगोपालानां तत्तद्वयोवेषानुरूपमयं मायया धृतवानित्यर्थः । किञ्च इडे विद्यमानाः ह्रीमव्ययं लज्जावतीर्मुग्धां-गनाः लक्षणया गोपवधूटीरित्यर्थः । ई इति पूर्वपदमत्रान्वेति ईयि-वानित्यर्थः । ई धातोः कर्तर्यौणादिक इप्रत्ययः । तत उक्तांगनाभिः ए–चत्वरादावित्यर्थः । के–जले च ईलीलामीयिवानिति चार्थः । अथ ईल ह्रीमित्येकं पदम् । ई – फणी प्रकृते कालियनामकः । तत्र प्रश्लिष्टइकारः फणवाची । तस्य फणे जातावेकवचनं लः लास्यं नृत्तं 'लसतेः क्विप्' तेन ह्रीं ह्र हरणं तदहंकारहरणं तस्मार्दी सद्गतिं प्रपितवानित्यर्थः । द्वितीयखण्डे अथ कदाचिन्मधुरापुरी-मेत्य हसकस्य देवदूपकस्य कंसस्य हलेन कर्षणेन ह्रीं नाशं प्रापितवा-नित्यर्थः ।

अथ तृतीयखण्डे सकल ह्रीं कलाभिस्सहितश्चतुःषष्टिकला-समेतः । सकलः श्रीगुरुस्सान्दीपनिः तस्मात् ह्रीं अव्ययं वेदादि-चतुःषष्टिकला विद्या इत्यर्थः । ह्रींकारस्य सर्वविद्याशक्तिरूपत्वात् "ह्रींकारवेदोपनिषदि "त्यादिस्मरणाच्च ।

ईल - ईर - अधीतवानित्यर्थः । अथ प्रथमखण्डे के - प्रभासतीर्थजले ए — गतं "इण् गता" विति धातोः पूर्वोक्तन्यायादंलोपश्छान्दसः । ईल ह्रीं — ईल — ईरः ईं — वाणीं विद्यामित्यर्थः । राति ददातीति ईर "रादान" इति धातुः । कपिरकादित्वाल्लत्वं "ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसर" इति रत्नमालाभिधानात् । विद्याप्रदो श्रीगुरुः प्रकृते सान्दीपनिमुनिः तस्य ह्रीमव्ययं पुत्रं "ह्रीं गर्भा ह्रीं पदाभिधे" ति त्रिशत्यां ह्रींकारस्य पुत्ररूपोपपादनात् । किञ्च हरति वीजमिति ह्र गर्भाशयस्तस्मात् । ई वहिर्गतिः तां म् माति प्राप्नोतीति ह्रीं । गर्भसम्भूतस्सुत इत्यर्थः ।

यद्वा ह्रीयते नीयतेऽस्मिन् दुःखायेति । ह्र ह्रते क्विप् पुंनामनरकमित्यर्थः । तस्य ई गतिरपगमनं तां माति निर्मातीति पुंनामनरकत्राणात् पुत्र इत्यर्थकत्वाच्च तं पूर्वं प्रभासतीर्थजले निमज्य गतं सान्दीपनिकुमारकमित्यर्थः ।

द्वितीयखण्डे—ह्रात् - प्रचेतसो वरुणात् । ह्रकारस्य "गर्वे प्रचेतसी" त्युक्तकोशाद्वरुणवाचित्वात् । सकः संज्ञानं "संज्ञीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इति कोशात् । तेन सहितः कः— आत्मा पूर्वज्ञानसहितसान्दीपनिकुमारः तस्य ह्लेन कषणेनाहरणेन ह्रीं — ह्री । ईमिति छेदः । ह्रीं धरित्रीं "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः । ईं प्रापितवान् ।

तृतीयखण्डे — सकलाय कलाविद्यावते गुरवे सान्दीपनय इत्यर्थः । ह्रीं — हृ — आहृत्य ईं —ई — प्राप्तिः तां म्—माति निर्मोत्यर्पितवानित्यर्थः । आवृत्या ह्रीं—भगवान् श्रीहरिरित्यर्थः । श्रीभगवतो गुरुदक्षिणार्पणकथा दर्शिता ।

॥ अथ भगवतः कथान्तरं दर्शयति ॥

प्रथमखण्डे — के — समुद्रे सप्तम्यास्तत्र स्थितइत्यर्थः । ए — अकारसप्तमी अन्तःपुरे द्वारकागृहान्तरे अत्र प्रश्लीष्टाकारो वासुदेवः । "अकारो वासुदेवस्स्या" दित्येकाक्षरकोशात् । ह्रीं सर्वांगसुन्दरीं श्रीरुक्मिणीदेवीमित्यर्थः । ईंल — ईंर — उपेयिवान् द्वारकावासी श्रीकृष्णः रुक्मिणीदेवीं परिणीय आस्थित इत्यर्थः ।

॥ कथान्तरं भारतं दर्शयति ॥

द्वितीयखण्डे हैः — दिव्यास्त्रविद्भिः हस्यास्त्रवाचित्वात् । अर्शाद्यच्प्रत्ययः । सश्च कश्च हश्च लश्च सकहलाः वायुयमाश्वीन्द्राः । उक्तकोशादत्र हकारस्याश्ववाचित्वेऽपि लक्षणयाऽश्विनावित्यर्थः । तेषां ह्रीमव्ययं शक्तिभिरंशभूतैर्भीमयुधिष्ठिरनकुलसहदेवार्जुनैरित्यर्थः । आवृत्या द्वितीयखण्डे—हसकानां देवपरिहासकानां दुर्योधनादिदुष्टराजानां हे रणे भारतयुद्धे लेन खण्डनेन ह्रीं— हृ—हरणात् ई विजयश्रिया सह राज्यश्रीस्तां—म् प्रापकः पाण्डवानामित्यर्थः । अथ तृतीयखण्डे—सकलह्रीं सकलः कर्तुमकर्तुमन्यथा कर्तुं शक्तः षाड्गुण्यपरिपूर्णः ह्रीं भगवान् श्रीकृष्ण इत्यर्थः । एवं भारतकथा दर्शिता ।

## ॥ अथ कुचेलचरित्रं दर्शयति ॥

प्रथमखण्डे—के—समुद्रे ए—सप्तमी अन्तः पुरे उक्तकोशात् । द्वारकापुरान्तर्गृहे—एकारान्ते—प्रश्लिष्टाकारार्थः श्रीकृष्णः । ईल ह्री—ई—कुत्सितं लं—डं वस्त्रं यस्य सः डकारस्य लत्वादेशोक्तेः । "डंक्लीवे डामरे पट" इति रत्नमालाभिधानात् । कुचेल इत्यर्थः । ईलस्य कुचेलस्य ह्रीं—ह्र—आहृतं इ—ई—इति छेदः । इ—अग्रतोर्थमुपायनं पृथुकतण्डुलमित्यर्थः । "इकारः फणरत्नार्चिष्वग्रतोर्थगुहार्थयो"रित्युक्तकोशात् । ई—जिह्वा "ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे । रसनायां शक्रचाप" इत्युक्त कोशात् । तत्र म्—माति वहति भक्षितवानित्यर्थः । कथमित्युच्यते—द्वितीयखण्डे—हसकहलेन हसेन हासेन केन शब्देन मधुरवाक्येन हलेन कर्षणेन ह्रीं—ह्र—हृत्वा गृहीत्वा ई—दीप्तिस्तां मुदं म्—माति वहति प्राप्तवान् मन्दस्मितमधुरवाक्यपूर्वमाकृष्य गृहीत्वा पृथुकतण्डुलभक्षणात्तृप्तिं प्राप्तवानित्यर्थः ।

अनन्तरमन्त्यखण्डे सकल ह्रीं गृहारामाश्वरथादिसर्वसम्पदमित्यर्थः । पूर्वोक्तन्यायात्—आवृत्या पूर्वखण्डे—ईल—दत्तवानित्यर्थः । इति कुचेलकथा दर्शिता ।

## ॥ सन्तानगोपालकथां दर्शयति ॥

अन्त्यखण्डे—सकलश्चासौ ह्रीं चेति द्वन्द्वसमासः । कलया नराख्यकलया सहितस्सकलोर्जुनः ह्रीं श्रीकृष्णः ह्रींकारस्य विष्णुबीजत्वात् । प्रथमखण्डे—के आदि श्रीनारायणनिकट इत्यर्थः । ए—

सप्तमी अन्तः पुरे उक्तकोशात् । श्रीवैकुण्ठे विद्यमानानित्यर्थः । ईलस्य ह्रीं—इति समासः । ई वाणीं विद्यां लाति गृह्णातीति ईलः विद्वान् कश्चिद्विप्रः । तस्य ह्रीमव्ययं पुत्रानित्यर्थः । द्वितीयखण्डे—ह—हे ब्रह्माण्डोपर्याकाशे हकारस्याकाशबीजत्वात् । स—सेन स्यन्दनमार्गेण—क—केन श्रीसुदर्शनचक्रज्योतिषा ह—गतिः हन्ति गच्छतीति गत्वेत्यर्थः । ल—ले—भूमौ लस्य पृथ्वीबीजत्वात् ।

ह्रीं—हृ—आहृत्य ई—प्रापितवानित्यर्थः । आवृत्या तृतीयखण्डे-सः अर्जुनसमेतो श्रीकृष्ण इत्यर्थः । अत्र सन्धिश्छान्दसः । ह्रीं—दश-कुमारान् तत्पित्रे विप्राय कल—कलयामास कलिः कामधेनुः समर्प-यामासेत्यर्थः । प्रथमखण्डे—के—समुद्रे ए—द्वारकागृहान्तरे स्थितं ह्रीं—भगवन्तं श्रीकृष्णं—ईल ईड—स्तुहीत्यर्थः ।

"शङ्खचक्रगदापाणे ! द्वारकानिलयाच्युत ! ।
गोविन्द ! पुण्डरीकाक्ष ! रक्ष मां शरणागतम्" ॥

इति श्रीद्वारकावासिनो भगवतः श्रीकृष्णस्य प्रतीच्यां दिशि त्रिषवण-सन्ध्योपासनायां नित्यस्मरणजाप्यप्वविधानात् ।

एवं बलराम श्रीकृष्ण भारतकथाश्च प्रदर्श्य दशमं कल्क्य-वतारं दर्शयति ।

## ॥ कल्क्यवतारकथा ॥

अथ द्वितीयखण्डे—हः अश्वः तस्य सकं सदृशं मुखं यस्य सः अश्वमुखवत्किञ्चिद्दीर्घमुखः—हसकः—सचासौ हलश्च ह्रीं चेति

समासः—हः—अश्वः वाहनं लः लूयते छिद्यतेऽनेनेति असिरायुधश्चास्यास्तीति ह्लः अर्शाद्यच् । अश्ववाहनः असिधरश्च ह्ली—महाशक्तिः तां मातीति—म्—महाशक्तिमानित्यर्थः ।

तृतीयखण्डे साः निवारिताः "स्यतेर्नाशकार्थत्वात्" "सं क्लीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इत्युक्तकोशाच्च । कलाः श्रुतिस्मृत्यादिविद्याः यैस्ते सकलाः वेदशास्त्रमतदूषकाः पाषण्डिन इत्यर्थः । तान् हरति संहरतीति ह्लीमव्ययं कलिमलदूषितसर्वदुष्टसंहारिणं प्रथमखण्डे एतादृशं ह्लीं विष्णुं कल्किमूर्तिमित्यर्थः । केचित्ते ए सप्तमी यज्ञादिकर्मणि ईल ईड स्तुहीत्यर्थः । एवं भाविकल्क्यवतारकथा च दर्शिता ।

## ॥ अथ शैवीं कथां दर्शयति ॥

प्रथमखण्डे कः—प्रजापतिर्दक्षः "को ब्रह्मणि समीरात्मयमदक्षेषु भास्कर" इति कोशात् । तथा भागवतादौ दर्शनाच्च । ह्लीं अत्र हः—शिवस्तस्मिन्—रात् विरसात् "रं क्लीवे रुधिरे मूर्ध्नि ध्यानव्योमाण्डकुक्षिषु । वह्नौ भये च त्रिषु तु विरसे त्यागतीक्ष्णयो"रिति रत्नमालाभिधानात् । ई परमेश्वरीं ए—सप्तमी यज्ञार्थे अत्र प्रश्लिष्टाकारः अव्ययं नेत्यर्थः । "अस्यान्निषेधोप्यल्पार्थे" इत्युक्तकोशात् ईल ईर रस्य कपिरकादित्वाल्लत्वं "ईर गतौ शब्दे" चेति धातोर्नाऽमन्त्रयामासेत्यर्थः ।

द्वितीयखण्डे ह्स्य रुद्रस्य से—निवारणेपि केन—स्वबुद्ध्या ले—दक्षयज्ञवाटे ह्री—ईमिति छेदः । ह्रचेतोपकर्षणात् ई गता ई सती-देवीत्यर्थः ।

तृतीयखण्डे—सकलैस्तत्रत्य दक्षादिभिर्देवर्षिभिः ह्रीं—ह्री—कृता-वमानजातलज्जा तस्याः ई—अपगमनार्थं प्रथमखण्डे—ए—सप्तमी यज्ञे के—अग्नौ यज्ञीयाग्नावित्यर्थः । ह्रीं—स्वदेहं ह्रीं शरीरिणीति त्रिशत्यां स्मरणात् । ईल—ईर—गमयामासेत्यर्थः ।

द्वितीयखण्डेऽनन्तरं ह्स्य रुद्रस्य सेन ध्यानेन कः—आत्मा स्वांशजातो वीरभद्रः । तेन ह्स्य गर्विष्ठस्य दक्षस्येत्यर्थः । लात् शिरः छेदनात् ह्रीं—ह्—इ—म्—इति छेदः । यज्ञीयदेवर्षीणां ह्—हरणात् ई—दुःखं—म् प्रापणात् । तृतीयखण्डे सकल ह्रीं—सकलहरण-शक्तिमन्तं सर्वहरणदुःखविनाशिनं च श्रीपरमेश्वरमित्यर्थः । प्रथम-खण्डे—अथ तैर्देवर्षिभिस्सह कः—ब्रह्मा ह्रीं विष्णुश्च ए—यज्ञपरिपू-त्यर्थे ईल—ईड तुष्टुवुरित्यर्थः ।

द्वितीयखण्डे—अनन्तरं ह्स्य शङ्करस्य सेन ज्ञानेनानुग्रहेणेत्यर्थः केन ब्रह्मणा हे—दक्षमुखस्थाने लस्य लपतस्य "लप् आलपने" इति धातोः क्विप् । अजमुखस्य ह्रीं—ह्हरणाद्योजनात् ई—शक्ति म्—प्रापितः दक्षो जीवितः यज्ञश्च समापितः ।

तृतीयखण्डे कथान्तरं सकलात् दिव्यशक्तिमतः हिमवन्नाम-गिरिवर्याज्जातां ह्रीं पार्वतीमित्यर्थः । प्रथमखण्डे—एकारः प्रश्लिष्टः ।

अकारः परमेश्वरः ईल प्राप पाणिमगृह्णादित्यर्थः । अनन्तरं ए—अकारसप्तमी उमायामुदाहृतकोशात् । ह्रीं—अत्र हेमुखे ऋ—कुञ्जरः यस्य सः हृ—गजाननमित्यर्थः । ऋकाररेफयोरत्यन्तभेदाविवक्षणात् । "ऋकारः कुञ्जरे शैले धीभेदे देवमातरि। भावे देवरिपौ नद्यां सुरायां देवरे दिवी"ति नानार्थरत्नमालाभिधानात् । ई—अग्रपूज्यं दुःखनिवारिणं विघ्नेश्वरं कर्मकाण्डोक्तन्यायात् ईल गजाननं पुत्रं प्रापेति सम्बन्धः । किञ्च ए—उमायां ततः के अग्नौ । आवृत्या के गङ्गाजले उपलक्षणेन शरवणे च संस्पृश्य जातं ह्रीं अत्र हृ—ईमितिछेदः । हृ—हनिमुखानि र—ऋतुः षड् यस्य सः मुखषट्कः षण्मुख इत्यर्थः ।

"रः पुमान् पावके कामे क्षयवज्रशयेष्वृता" विति कोशाद्दतूनां षट्संख्याकत्वाल्लक्षणया षडिति गृह्यन्ते । तं ई—ई—शक्तिः शक्त्यायुधं म्—माति वहतीति शक्तिधरं द्वितीयपुत्रं सुब्रह्मण्यञ्च ईल प्रापेत्यर्थः ।

द्वितीयखण्डे—हेत्याश्चर्यं स गजाननः सन्धिश्छान्दसः । कहलश्चासौ ह्रीं चेति समासः कः दीप्तः हेन मुखेन ल—लुनाति त्रुटतीति जातिधर्मत्वाद्धलो मूषिको वाहनं यस्य सः कहलो मूषिकवाहनः । ह्रीं—हृ—गजमुखासुरस्तस्य ई गतिः विनाशः । तां मातीति गजमुखासुरसंहारकारीत्यर्थः । तृतीयखण्डे तादृशं सकलह्रीं सर्वसम्पत्प्रदम् । प्रथमखण्डे—ह्रीं—महागणपतिं—ए इज्यादि सर्वकर्मादावित्यर्थः के—

च्चित्ते ईल – पूजय सम्पूज्य स्तुहीत्यर्थः । किञ्च आवृत्या ए–प्रभातकाले ।

"एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ ।
व्योम्न्येकादशसंख्यायां दिनादौ मणिकुट्टिम" ॥

इत्युक्तकोशात् । ह्रीं–महागणपतिमुद्दिश्येत्यर्थः । के–अग्नौ आवृत्या ह्रीं–ह्व ह्स्य त्रिणेत्रस्येव रं मुखं यस्य तन्नालिकेरमित्यर्थः । ईं–इ–ईमिति छेदः तन्नालिकेरं इ–आदिद्रव्यं येषां तेषां ईंरसनाग्राह्यापूपादीनां पुनश्च ह्रीं–ह्व समाहरणेन ई–योजनीकृतं द्रव्याष्टकमित्यर्थः । अत्र नालिकेरस्य प्राधान्यदर्शनादशक्तानां तन्मात्रमपि फलप्रदमिति गम्यते । ईल ईर जुहुधीत्यर्थः । एतेन गणपतिं पूजया होमेन च यथाशक्ति प्रसाद्य स्तुहीत्यर्थः ।

अथ सुब्रह्मण्यचरितं–प्रथमखण्डे के मयूरे ई–"कर्तर्यौणादिक" इप्रत्ययः विशन्नित्यर्थः । ल्ह्री–शत्रुच्छेदनमहाशक्तिं तथाविधायुधविशेषं वा मातीति म्–वहन्नित्यर्थः । ए–सप्तमी युद्धे द्वितीयखण्डे ह ! आश्चर्यं सः सुब्रह्मण्यः "सः पुंस्युमासुते वाया"विति कोशात् । कहलश्चासौ ह्रीश्चेति समासः । कः–ब्रह्मा हः विष्णुस्तयोरपि लः–आज्ञाविच्छेदकः कहलः ह्रीं–अत्र ह्र–हः गर्विष्ठः ऋ–देवरिपुरुदाहृतकोशात् प्रकृते तारकनाममहासुरः । तस्य ई–विनाशकरः । किञ्च । सर्वेषां गर्विष्ठदेवरिपूणामपि संहारकर आसीदित्यर्थः । तृतीयखण्डे–तादृशं सकल ह्रीं सर्वशत्रुसंहारिणं सर्वसम्पत्प्रदं च प्रथमखण्डे–ह्रीं–

सुब्रह्मण्यं ए—रणे शात्रवादिसङ्कटे के—चित्ते ईल—ईड संस्मृत्य स्तुहीत्यर्थः। एवं शैवपुराणकथा विस्तरभयात्संक्षिप्य प्रदर्शिता।

## ॥ अथ देवीमाहात्म्यकथा ॥

अथ मार्कण्डेयपुराणभागवतादि देवीकथां दर्शयति—तत्र मार्कण्डेयपुराणदेवीकथा—प्रथमखण्डे के—कल्पार्णवे ए—हरिः ह्रीं—योगमायां निद्रारूपां ईल प्रापेत्यर्थः। आवृत्या कः—तन्नाभिस्थो ब्रह्मा ए—सप्तमी विष्णौ ह्रीं—व्याप्य स्थितां मोहिनीं महाकालिकां ईल ईड तुष्टाव मधुकैटभभयनिवारणार्थमित्यर्थः। आवृत्या ह्रीं—स्तुतिसन्तुष्टा महाकाली ईल ईर मधुकैटभवधार्थं हरिं प्रेरयामासेत्यर्थः। कः स हरिः ए—युद्धे आवृत्या ह्रीं ह्र—गर्वितमध्वसुरः कैटभासुरश्च तस्य ई—प्राणगतिस्तां मिनोति नाशयतीति मृ—मधुकैटभासुरविनाशकृदासीदित्यर्थः। इदं सप्तशत्यां प्रथमाध्यायदर्शितमादिमं कालीचरित्रम्।

अथ द्वितीयखण्डे—हश्च सश्च कश्च हश्च लश्च हसकहलाः हः—सूर्यश्शम्भुश्च सश्चन्द्रो वायुश्च कः ब्रह्माऽग्निर्यमश्च हः विष्णुः लः इन्द्रः ह्रीं—ह्र—ई—अत्रत्य हकारः वरुणः ऋकारो निरुतिः। एतेषां देवानामुपलक्षणया सर्वदेवर्षीणामित्यर्थः। ई—ईमिति छेदः। इ—अर्चिभिस्तेजोभिरंशैरित्यर्थः। जातां ई—महालक्ष्मीमीडेत्यनुकृष्यते। सर्वे देवर्षयः पूजनायुधसमर्पणादिना ईड तुष्टुवुरित्यर्थः। आवृत्या प्रसन्ना सा भगवती हस जहासेत्यर्थः। आख्यातलोपश्छान्दसः। कहल ह्रीं के—शिरसि हलेन कर्षणेन ह्र—गर्वितमहिषासुरस्तस्य ई—

शूलेन विदार्य प्राणगतिविनाशिनी महिषासुरमर्दनीत्यर्थः । ईल ह्रीमिति पुनस्संबध्यते ह्रीं—एवं भूतां देवीं ईल ईड तुष्टुवुस्सर्वे देवर्षय इति सप्तशतीद्वितीयाध्यायमारभ्य चतुर्थाध्यायपर्यन्तमध्यायत्रितयात्मकं मध्यचरित्रसञ्ज्ञं महालक्ष्मीचरित्रम् ।

अथ तृतीयखण्डे सकला कलया सहिता गौर्यंशभूतेत्यर्थः । किञ्च कलाभिश्चतुः षष्टिविद्या कलाभिस्सहिता सा—च—ह्रीं च सकलह्रीं श्रीमहासरस्वतीसंज्ञां श्रीदुर्गाभगवतीं ईलेत्यनुषज्यते ईड तुष्टुवुर्देवा इत्यर्थः । पुनश्चावृत्या—सकलानां धूम्रलोचनचण्डमुण्डरक्तबीजाद्यसुराणां ह—गर्वितशुम्भासुरो निशुम्भासुरश्च तयोरपि ईं—प्राणसंहारिणीं महासरस्वतीदेवीमावृत्या सकल ह्रीं—सः वायुः कः सूर्यः यमश्च लः शक्रः ह्रीमित्यत्र ह—वरुणः रः—अग्निः ईं—ईं—ईं—इति च्छेदः । ईं नवनिधिसम्पदं ईं प्राप्तः कुबेरः म्—चन्द्रः एतदादयो देवास्सिद्धार्थास्सन्तुष्टास्तुष्टुवुरिति चार्थः । इदमेवान्त्यचरित्रम् । सप्तशतीपञ्चमाध्यायमारभ्य त्रयोदशाध्यायपर्यन्तं महासरस्वतीचरित्रम् । एवञ्च सप्तशतीचरित्रत्रितयं सकलह्रीं सर्वसम्पत्प्रदं विज्ञेयम् ।

## ॥ अथ देवीभागवतकथा ॥

प्रथमखण्डे—के—सुधासिन्धौ उक्तकोशात् । ए—सप्तमी मणिद्वीपदिव्यगृहान्तर इत्यर्थः । ह्रीं भुवनेश्वराङ्कमध्यस्थां श्रीभुवनेश्वरीदेवीमावृत्या कः ब्रह्मा ए—विष्णुः अत्र प्रश्लिष्टाकारशिवः उपलक्षणयाऽन्यदेवर्षयश्च । ईल ईड तुष्टुवुः । प्रसन्ना सा भगवती त्रिमूर्तिभ्योऽ-

न्येभ्यश्च तत्र तत्र यथायोग्यं ह्रीं—नवार्ण वाग्भव कामराज शक्ति-भुवनेश्वर्याद्यात्मकं महाबीजमन्त्रकदम्बं ईल ईर उपदिदेश । एवं प्रसन्ना त्रिभुवनेश्वरी भगवती देवी सर्वाभीष्टप्रदायिनीति भावः ।

॥ श्रीललितोपाख्यानम् ॥

अथ ब्रह्माण्डपुराणादावुक्तां श्रीललितांबिकाकथां स्वीयां स्वयमेव दर्शयति ।

प्रथमखण्डे—कः—परमात्मरूपश्शिवः ए—सप्तमी चिच्छक्त्यात्मिकोऽमायां ह्रीं—उमादेवी आवृत्या के परमेश्वरे च ईर मनः प्रेरयामास । अन्योन्यसिद्ध्यर्थं तपोनिष्ठावभूतामित्यर्थः । "परस्परतपस्सम्पत्फलायितपरस्परा"विति स्मरणात् ।

अथ द्वितीयखण्डे—हसकस्य सर्वान् तुच्छीकुर्वतस्तारकासुरस्य हस्य शिरसः लाय छेदनाय ह्र—षण्मुख उक्तन्यायात्तस्य—ई—गत्यर्थकत्वात् प्रादुर्भावः । तस्यामतीति म् "अम्गता"विति धातोः क्विप् । सुब्रह्मण्यप्रादुर्भावसिद्ध्यर्थमित्यर्थः ।

तृतीयखण्डे—सकलानां दिव्यांशभूतानां सर्वजनानाञ्च ह्र—हृदयं ई कर्षकं तत्र प्रश्लिष्टं इं मन्मथं ईर प्रेरयामास शिवचित्ताकर्षणार्थं देवेन्द्रो मन्मथं प्रेषयामासेत्यर्थः । प्रथमखण्डे—अथ मन्मथः ए—उमायां निमित्ते सप्तमी ह्रीं—तत्र हः रुद्रः तस्य रं—ध्यानं "रं क्लीवे रुधिरे मूर्ध्नि ध्याने" त्यादि कोशात् । तस्य ई—अपगमनं भेदनं तत्र प्रश्लिष्टं ई बाणं रुद्रध्यानभेदनास्त्रमित्यर्थः । के—परमेश्वरे ईर—

उमायामीश्वरस्य चित्तमाकर्षयितुं बाणं प्रेरयामासेत्यर्थः। अथ बाणविद्ध ईश्वरस्तमावृत्त्या ए—इकारस्य सम्बुद्धिः। अरे! मन्मथेति सम्बोध्य ह्रीं—मच्चित्ताकर्षणबाणं प्रेरयसीति क्रुद्धन्नित्यर्थः। के—तृतीयनेत्राग्नौ आवृत्त्या ईर गत्यर्थकत्वात् प्रापयामास भस्मीचकारेत्यर्थः। अनन्त-रमावृत्त्या कः कश्चिच्चित्रकर्मा चित्रसेनाख्यो गणेश्वरः ए—एकारस्य तेजोवाचित्वाल्लक्षणयाऽग्नेयं भस्मेत्यर्थः। ह्रीं—अत्र ह—मुखं र—पाणी ई—गतिसाधनत्वाच्चरणावाहृत्य मुखपाणिद्वयपादद्वयवत् पुत्तलिकाकारं म्—माति वहतीति पुरुषरूपमित्यर्थः। ईर प्रवर्तयामासेत्यर्थः।

द्वितीयखण्डे—तच्चित्रदर्शनानन्तरं हस्येश्वरस्य सेन तच्चित्रध्या-नेन कः लब्धचेतनो भण्डासुरस्तस्य क्रोधाग्निदग्धभस्मराशिरूप जन्यत्वादसुरत्वम्। तस्य हेन शब्देन चित्रसेनदत्तरुद्राध्यायजपेन लह्रीं शिवानुग्रहेण त्रिभुवनहरणशक्तिमान्। तृतीयखण्डे सकलान् कलास-मेतान् ब्राह्मणादीन् सर्वानपि हरतीति ह्रः ईं—तदाक्रमणशक्तिमां-श्चासीदित्यर्थः। तदा सर्वेऽपि देवाः भयोद्विग्नास्सन्तः महायागं कर्तुं प्रवर्तयामासुरिति कथाऽत्रानुसन्धेया। अथ प्रथमखण्डे ए—महायागे के—तद्यागाग्नौ महायागोनाम ब्राह्म्याद्यष्टमहाशक्तिसम्भूतचतुःषष्टि-महाशक्तिपूजासमेतो यज्ञः। तस्य विस्तरस्तन्त्रेष्ववगन्तव्यः। ह्रीं—हरीमव्ययं ह्रींकारस्य हरीमिति विरलवर्णरूपेण ग्रहणमगस्त्य-महामुनिभाष्यादौ प्रदर्शनात्। हरिरिन्द्रः इ—अग्रतः म्—माति वह-तीति इन्द्रादिदेवसमूहइत्यर्थः। आवृत्त्या ह्रीं—मुखकरचरणादिरूपं देहं ईर—उत्कृत्योत्कृत्य चिक्षेप चेत्यर्थः।

अथ द्वितीयखण्डे—हसकाद्विकसितानलादित्यर्थः । हलं कर्षकं सर्वदृष्टितेजोपसंहारकं ह्रीं—सूर्याग्निसोममयतेजःपुञ्जमित्यर्थः । तृतीयखण्डे—अग्निकुण्डोद्भूततेजःपुञ्जमद्ध्ये सकलं विन्दु त्रिकोण वसुकोण दशकोणद्वयमनुकोण वसुदलषोडशदल वृत्तभूपुरत्रयात्मककलासमेतं षोडशकलात्मकपूर्णचन्द्रवद्वृत्ताकारं च श्रीचक्ररूपं ह्रीं—तेजःपुञ्जमाविर्बभूवेत्यर्थः । प्रथमखण्डे के—तत्तेजःपुञ्जमद्ध्ये ह्रीं प्रादुर्भूतां सर्वतेजोमयीं मुखपाणिपादादिसर्वाङ्गसुन्दरीं ब्रह्मविष्णुशिवशक्तिमयीं श्रीपरदेवतां ललितांबिकां ईल—ईलः सन्धिश्छान्दसः इ—अग्रतः ई—प्राप्तः लः—इन्द्रः यस्य सः इन्द्रपुरोगमः । ए—अत्राकारस्येज्यावाचित्वादिकारस्याग्रतोर्थकत्वात् प्रश्लिष्टेकारस्य प्राप्त्यर्थकत्वाचाकारवाच्ये यज्ञे इकारवाच्यमग्रतोर्थं देवेभ्योऽर्पितं—पुरोडाशं ई—भाक् यज्ञहविर्भागभुग्देवगण इत्यर्थः । आवृत्त्या ईड तुष्टाव "जयदेवि जगन्मात" रित्यादिना स्तवराजेनेन्द्रादयो देवास्तुष्टुवुरिति भावः । अत्रेयं ब्रह्माण्डादावुपबृंहिता कथाऽनुसन्धेया—

"द्वितीयमुदभूद्रूपं महायागानलात् पुनः"
"चिदग्निकुण्डसम्भूता"
"महायागानलोत्पन्ना ललिता परमेश्वरी"
"प्रादुर्बभूव परमं तेजःपुञ्जमनूपमम्"
"कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम्"
"तन्मध्यमे समुदभूच्चक्राकारमनुत्तमम् ।

तन्मध्यमे महादेवीमुदयार्कसमप्रभाम् ॥
जगदुज्जीवनाकारां ब्रह्मविष्णुशिवात्मिकाम् ।
कृपातरंगितापाङ्ग नयनालोककौमुदीम् ॥
तुष्टुवुश्च महादेवीमंबिकामखिलार्थदाम् ।"

इत्यादि—

अथ शिवयोर्विवाहः—प्रथमखण्डे—कः कामशिवः — ए — कल्याणमण्डपे ह्रीं श्रीललितापरमेश्वरीं ईर प्राप पाणिमगृह्णादित्यर्थः ।

॥ अथ जैत्रयात्रा ॥

ए—अकारसप्तमी सूक्ष्माकारस्य बिन्दुरूपत्वाच्छ्रीचक्रराजरथमध्यबिन्दौ सप्तम्यर्थो निष्ठत्वं—के—बिन्दुस्थकामेश्वरे लक्षणया तदङ्क इत्यर्थः । ह्रीं—श्रीकामेशोत्सङ्गवासिनी श्रीललिताम्बिका आवृत्या—ए—युद्धे ह्रीमव्ययं स्वांगसञ्जातशक्तिभिस्सह—ह्रींकारस्य द्वादशवर्णात्मकस्यानेकशक्तिमत्वात् ईल चचालेत्यर्थः । द्वितीयखण्डे—हसका मन्दस्मितमुखि कवर्णस्य मुखवाचित्वं तु—"हसकन्तु हसद्वदन" मिति वरिवस्यादौ दर्शनात् । हल हलधरा "अर्शाद्यच्" हसका च हला च ह्रीं चेति समासः । मन्दस्मितमुखीशक्तिर्मातङ्गीमन्त्रिणी—हलधराशक्तिर्वाराही दण्डनाथाचेत्यर्थः । किञ्च हसकानां भण्डादिदुष्टासुराणां हलाः कर्षिण्यः ह्रीं—अव्ययं—अनेकशक्तयश्च ईल चेलुरित्यर्थः । तृतीयखण्डे—सकले श्रीचक्रे ह्रीं—तत्तत्पर्वस्थशक्तयश्च । किञ्च सकलाः स्वांशभूतास्स्वसृष्टाश्च ह्रीं—शक्तयः एवमेनकसहस्रश-

क्तयो भण्डासुरवधोद्युक्ता ईर—चेलुरित्यर्थः । अथ महाराज्ञीपरिवार-देवीनां रथगजतुरगपदाति—शस्त्रास्त्र पराक्रमसम्पत्तिं दर्शयति—द्वितीयखण्डे हाः—अश्वाः साः—रथाः "संक्लीवे स्यन्दनपथे ज्ञानेध्याने निवारण" इति कोशात् । संरथमार्गअस्त्येषामिति । "अर्शाद्यच्" तद्वैशिष्ट्याद्रथा इत्यर्थः । काः पदातयः कस्यात्मवाचित्वात् । हानि-अस्त्राणि लानि छेदनसाधनानि शस्त्राणि ह्रीं — हृ — मत्तगजाः एतेषां ई — श्रीः सम्पत्तां माति वहतीति ह्रीं — अव्ययं — तथा च — अश्वरथपदातिदिव्यास्त्रशस्त्रमहागजसम्पन्नत्यो देव्यइत्यर्थः । किञ्च तृतीयखण्डे—सकल ह्रीं सर्वसंहरणशक्तिमत्यश्चेति शक्तीनां विशेषणं ज्ञेयम् ।

अथ युद्धारम्भः प्रथमखण्डे — ए — युद्धे के युद्धप्रथमदिवसे कस्य द्युतिवाचित्वात् । ह्रीं हृ — हकारस्य गर्ववाचित्वात् ऋकारस्य कुञ्जरवाचित्वाच्च मत्तगजस्तदधिष्ठात्री ई — शक्तिः महागजारूढा सम्पत्करीनाम महालक्ष्मीदेवीत्यर्थः । आवृत्या ह्रीं हृ — गर्वितासुरो दुर्मदनामा तस्य ई - शक्तिस्तां मिनोति नाशयतीति — म् — दुर्मदा-सुरयुद्धविक्रमविनाशिनीत्यर्थः । ईल — ई — इल — ई — दुःखभा-वेन "कोपे दुःखभावन" इति कोशात् । इल "इल स्वप्नक्षेप-णयो" रिति धातोः स्वापयामास । स्वाभिमुखयोद्धारं दुर्मदनामा-नमसुरं मारयामासेति भावः । ईलेत्यत्राख्यातलोपश्छान्दसः । अस्मिन्मन्त्रे सर्वशास्त्रार्थसारसंग्रहरूपत्वेन सर्वदिव्यार्थस्य विवक्षि-

तत्वाद्धातुमात्रग्रहणं सर्वत्र वेदितव्यम् । दुर्मदादिदैत्यवधकथा ललितोपाख्यानादौ द्रष्टव्या ।

अथ तस्मिन्नेव दिने प्रथमखण्डे – ह्रीं – ह्स्याश्वस्य रे – मूर्धनि "रं क्लीबे रुधिरे मूर्ध्नी" ति कोशाद्धयोपरीत्यर्थः । ई तत्र-स्थिता शक्तिरश्वारूढा देवीत्यर्थः । आवृत्या ह्रीं पूर्ववत् कुरुण्डनामा-सुरपराक्रमविनाशिनीत्यर्थः । ईल तं मारयामास । अथ तस्मिन्नेव दिने ईल ह्रीमित्येकं पदं ई पन्नगं लुनाति खण्डयतीति ईला गरुड-स्तस्मिन् स्थिता ह्रीं – हे – मुखे आस्ये रः वज्रः दन्तरूपो यस्य सः ह्रः नकुलस्तं ई गमयती जनयन्तीत्यर्थः । अत्रेकारप्रश्लेषात् ई वाणीदेवी गरुडारूढा नकुलीसरस्वतीदेवीत्यर्थः । द्वितीयखण्डे हस-कानां करङ्कादिपञ्चसेनापतीनां हानि अस्त्राणि सर्पिणीमायाकृत-सर्परूपाणि च तेषां लेन खण्डनेन ह्रीं – ह्र हरणं संहरणं ई कृतव-तीत्यर्थः । अथ वलाहकादिसप्तसेनापतिवधः तृतीयखण्डे सक-लानां सर्वेषां ह्रीं हः रविः रोऽग्निः इश्चन्द्रः तानपि ई गह्वरं कन्दरवन्माति तमोभावं तनोतीति तिरस्करणिका सर्वप्रकाशमण्डल-तिरस्करणान्महातिरस्कारिणी देवीत्यर्थः । द्वितीयखण्डे – हसकानां वलाहकादिसप्तसेनापतीनां हस्य चक्षुस्सन्निहितसूर्यस्य लेनाऽदानेन तमसा समाच्छादनेनेत्यर्थः । ह्रीं ह्र ह दीप्तं "हं क्लीबमस्त्रमुखयोः क्वणिते मणिरोचिषी" ति कोशात् । रं शिरः ई गमनं नाशं म्-माति वलहकादिसप्तसेनापतीनां दीप्तशिरश्छेदनकारिणीत्यर्थः ।

अथ विषङ्गपलायनं तृतीयखण्डे—सकलाः सस्य चन्द्रस्य कलाश्चन्द्रकलारूपपञ्चदशतिथ्यभिमानिन्यः पञ्चदशनित्यादेव्यः कामेश्याद्य इत्यर्थः । ह्रीं दमनादि पञ्चदशदुष्टासुरान् प्रत्येकं विनाशितवत्य इत्यर्थः ।

किञ्चानन्तरं ह्रीमव्ययं पञ्चदशनित्यादेवीभिः सः विषंगः कल कालितः प्रधावित इत्यर्थः । "कल गता" विति धातोः आख्यातलोपः छान्दसः ।

अथ वह्निप्राकारकरणं प्रथमखण्डे महाराज्ञ्याज्ञापनानन्तरं के द्वितीययुद्धदिने ह्रीं — हे — मुखे रः अग्निस्तस्य ई अर्चिर्ज्वाला तत् - इ — अग्रतः माति निर्मातीति ज्वालामालिनिकानाम चतुर्दशी नित्यादेवीत्यर्थः । ए — तेजः ईल सैन्यस्य प्रकाराकारे प्रवर्तयामास ।

"ज्वालामालिनिकाक्षिक्  कॢप्तवह्निप्राकारमध्यगे" त्यादिस्मरणात् ।

॥ अथ भण्डपुत्रवधः ॥

तृतीयखण्डे सकला च ह्रीश्चेति समासः । महाराज्ञ्यास्समाः कलाः विद्यादयो यस्यास्सा समाकला शक्तिर्यस्यास्सा सकला महाराज्ञी तुल्यकलाशक्तिमती चेत्यर्थः । ह्रीं श्रीबालापरमेश्वरी श्रीललितांबिका कुमारी ।

" कुमारी ललितादेव्यास्तस्या निकटवासिनी ।
समस्तशक्तिचक्राणां पूज्याविक्रमशालिनी ॥

ललितासदृशाकारा कुमारी कोपमादधे ।
या सदानववर्षैव सर्वविद्यामहाखनिः ॥"

इत्यादि ललितोपाख्यानोपबृंहणात् । ह्रींकारस्य बालाबीजत्वात् वाग्भवमारमायाबीजत्रितयरूपेणापि बालत्र्यक्षरीमन्त्रान्तरोद्धारदर्शनाच्च द्वितीयखण्डे हसकानां चतुर्बाह्वादित्रिंशत्भण्डपुत्राणां हानि शिरांसि लेनासिना ह्रीं विनाशितवतीत्यर्थः ।

अथ विशुक्रकृतविघ्नयन्त्रविनाशनाय विनायकसम्भवः प्रथमखण्डे के महाकामेश्वरे ए—सप्तमी चक्रराजरथविन्दुपीठे स्थिता ईश्रीललिताम्बिका ईकारप्रश्लेषात् इल ह्रीं इलात् कटाक्षविक्षेपणात् कामेश्वरमुखवीक्षणादित्यर्थः । ह्रीं—ह्र गजाननस्तस्य ई—प्रादुर्भावस्तां मातीति म् । प्रादुर्भावं कारितवतीत्यर्थः ।

"कामेश्वरमुखालोककल्पितश्रीगणेश्वरे"ति स्मरणात् । सः विघ्नेश्वरः द्वितीयखण्डे—हसकानां विशुक्रानुगतदैत्यानां हलं—हं—गर्वं देवीशक्तिसैन्योत्साहमित्यर्थः । तं लुनाति 'छिनत्तीति हलमुत्साहविनाशकं देवीसैन्यालस्यकरविघ्नयन्त्रमित्यर्थः । तस्य च ह्रीं विनाशप्रापकोऽभूदित्यर्थः ।

अथ तृतीययुद्धदिवसे विशुक्रविषङ्गवधः । द्वितीयखण्डे हसका च हला च ते ह्रीमव्ययं द्वे शक्ती ह्रींकारस्य शक्तिद्वयार्थस्त्वित्थं—ह्रीं—ह्र—हं—मणिरोचिस्स्वांगुलीयरत्नरोचिः रे रे करेऽगुल्यां यस्यास्सा च ईश्च मुद्रिणी देवीत्यर्थः । ह्रीं हे—मुखे रः वज्रं द्रंष्ट्रारूपो यस्यास्सा

च ईश्च दंष्ट्रीशक्तीर्वाराही । यद्वा—हं वाक्यं रं तीक्ष्णं यस्यास्सा च ईश्च दण्डनाथादेवीत्यर्थः । आवृत्त्या हसकस्य देवपरिहासकस्य विशुक्रस्य हल ह्रीं—हेन ब्रह्मशीर्षास्त्रेण लात् छेदनं कृत्वा ह्रीं नाशं प्रापितवती मन्त्रिणीदेवीत्यर्थः ।

तथा दण्डनायिकापि हसकस्य विषङ्गस्य हलेन सीरेण ह्ल आकृष्य ईं नाशं कृतवतीत्यर्थः ।

अथ चतुर्थदिवसे भण्डासुरवधः । प्रथमखण्डे—ए—सूक्ष्माकाररूपे श्रीचक्रबिन्दौ स्थिते के महाकामेश्वरे ह्रीं तदुत्सङ्गवासिनी श्रीललिताम्बिका । द्वितीयखण्डे हाः अश्वाः साः रथाः काः पदातयः हानि अस्त्राणि लानि शस्त्राणि ह्रीं—ह्ल—मत्तगजाः ईमव्ययं उक्तचतुरङ्गसैन्यदिव्यास्त्रशस्त्रसमेतशक्तिभिरित्यर्थः । तृतीयखण्डे—सकले श्रीचक्ररथे ह्रीमव्ययं श्रीचक्रराजरथनवपर्वाधिष्ठितानेकशक्तिभिश्च ईल भण्डासुरादिहननाय प्रचचालेत्यर्थः ।

अथ द्वितीयखण्डे — हसकस्य ब्रह्मेन्द्रादीनपि तुच्छीकुर्वतो भण्डासुरस्य हानां दिव्यास्त्राणां लेन दिव्यास्त्रप्रयोगात् खण्डनेन ह्रीं शत्रुसंहरणचातुरीशक्तिं दर्शयामासेत्यर्थः ।

अथ तृतीयखण्डे—सकलस्य भण्डासुरसर्वसैन्यस्य ह्रीं हस्य पाशुपतास्त्रस्य रेणाग्निना ईव्याप्तिस्तां मातीति म् कृतवती पाशुपतास्त्राग्निना भण्डासुरसर्वसैन्यानि भस्मीचकारेत्यर्थः ।

"महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिके"ति स्मरणात् । अथ द्वितीयखण्डे ह्सकस्य भण्डासुरस्य हेनानेकरत्नरोचिषा युक्तस्य लस्य पार्थिवबीजत्वात्भण्डासुरावासस्थानस्य धनसमृद्धस्यापि विपरीतलक्षणया शून्यकाख्यस्य पुरस्य च ह्रीं ह्स्य श्रीकामेश्वरीदिव्यास्त्रस्य रेणाग्निना ईं व्याप्तिं मातीति म् कृतवती भण्डासुरं तत्पुरञ्च श्रीकामेश्वरास्त्राग्निना भस्मीचकार श्रीललिताम्बिका परमेश्वरीत्यर्थः ।

"कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यके–"ति स्मरणात् । अथतां श्रीराजराजेश्वरीं श्रीललिताम्बिकां स्तुवन्ति देवाः ब्रह्मविष्णुरुद्रेन्द्रादयः कः ब्रह्मा ए–हरिः तत्रत्याकारो हरः ह्रीं – अत्र विरलाक्षरत्वेन ग्रहणाद्धरिं हरिरिन्द्रः इ अग्रतः माति वहतीति–म्–अव्ययं इन्द्रादयोदेवा इत्यर्थः आवृत्त्या ह्रीं श्रीमहाराज्ञीं ईड तुष्टुवुरित्यर्थः । एवं श्रीललितोपाख्यानसङ्ग्रहो दर्शितः ।

॥ श्रीपुरन्तूपरिष्टाद्वक्ष्यते ॥

अत इयं श्रीविद्यासर्ववेदवेदाङ्गशास्त्रपुराणेतिहासादिसर्वप्रमाणशब्दकदम्बसङ्ग्रहमयी भवति । उक्तञ्च–"कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः पुनर्गुहासकला मायया च पुरूच्येषा विश्वमाताऽदिविद्ये" ति "सैषा शाम्भवी विद्या कादिविद्येति वा हादि विद्येति वा सादि विद्येति वा रहस्यं ओं ओं वाचि प्रतिष्ठे" ति ।

"सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी बालाम्बिकेति बगलेति मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यंगिरा धूमावती गायत्री सावित्री सरस्वती ब्रह्मानन्दकले" ति—

"इयं महोपनिषत्त्रिपुराया यामक्षरं परमे गीर्भिरीडे एष ऋग्यजुः परमेतच्च सामायमथर्वोऽयमन्या च विद्यों ह्रींमों ह्रीमोमित्युपनिषदि" ति

"मन्त्राणां मातृकादेवी शब्दानां ज्ञानरूपिणी" त्यादि श्रुतिभिः "विधात्री वेदजननी" "महामन्त्रा महातन्त्रा छन्दःसारा शास्त्रसारा मन्त्रसारा" "आत्मविद्या महाविद्या श्रीविद्या" कामसेविता श्रीषोडशाक्षरीविद्या त्रिकूटा कामकोटिके"त्यादि वचनैश्च—

विष्णुपुराणे च—

"यज्ञविद्या महाविद्या गुह्यविद्या च शोभने !
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनि !
आन्वीक्षिकी त्रयीवार्ता दण्डनीतिस्त्वमेव हि"—

इत्यादिपद्यैश्च। तस्मात्सर्ववेदशास्त्रसारसर्वस्वभूतेयं श्रीविद्येति सिद्धम्।

## ।। अर्थ प्रपञ्चात्मकत्वम् ।।

अथ श्रीविद्यायाश्शब्दप्रपञ्चात्मकत्वं प्रदर्श्यार्थप्रपञ्चात्मकत्वं प्रदर्शयितुमादिकारणसृष्टिं दर्शयति – ननु श्रीविद्यामन्त्रस्य सर्वशास्त्रमयत्वस्येष्टत्वेपि तस्यैव कथं सर्वार्थप्रपञ्चात्मकत्वमिति चेदुच्यते – सर्ववेदवेदाङ्गशास्त्राद्युक्तपदार्थानामस्या एवोत्पन्नत्वात् । सूक्ष्मबीजस्थानीयायां श्रीविद्यायां शाखोपशाखादिवृक्षसूक्ष्मरूपस्थितिवत्सर्वप्रपञ्चार्थानामस्यामवस्थितत्वात् । सर्वपदार्थाभ्यर्हितेयं श्रीविद्येति शुद्धसत्वचित्तवृत्तिभिर्महाश्रीविद्यायोगिभिरेवावबुध्यते । तथा हि "पुरूच्येषा विश्वमातादि विद्ये" ति श्रुत्या पुरुची पुरातनी एषोदिता श्रीविद्याऽदिविद्याऽदिकारणमहाविद्या विश्वमाता विश्वस्य सर्वप्रपञ्चस्य माता जननीति श्रीविद्याया जगज्जननीत्वदर्शनात् ।

"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेराप अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योन्नं अन्नात् पुरुष" इति तैत्तिरीयश्रुत्या । अपञ्चीकृतशब्दतन्मात्रात्मकाकाशादेव वाय्वादिभूतानामुत्पत्तिप्रतिपादनेन शब्दादेव प्रपञ्चोत्पत्तिदर्शनात् ।

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकारएव सर्वं ह्येतत् ब्रह्मेति" माण्डूक्यश्रुत्यादिना तत्कारिकाभाष्यादिना च शब्दस्यार्थरूपत्वप्रदर्शनाच शब्दस्यार्थात्मकत्वमर्थस्य शब्दात्मकत्वञ्च परमतत्व-

विद्भिरनुभूयमानत्वाच्च । अत एव वाच्यवाचकयोरभेद इति वैयाकरणैर्वाच्यवाचकयोर्नित्यसम्बन्ध इति मीमांसकैश्चाङ्गीकृतः । मन्त्रदेवतयोरत्यन्तभेदाभावस्यास्माभिरप्यङ्गीकृतत्वाच्च सर्वपदार्थात्मकत्वं श्रीविद्यामन्त्रस्य सिद्धम् ।

अथ प्रथमखण्डे – क – इति – "कं ब्रह्मेत्युपासीते"ति श्रुतेः "कन दीप्ता" विति धात्वर्थयोगेन चिद्रूपत्वात् "कं शिरोंबुसुखे क्लीव" मिति "को ब्रह्मात्मानिलार्काग्नि" रिति कोशाच्च सच्चिदानन्दात्मकं परं ब्रह्मेति ककारार्थः । कवर्णविलेखनक्रमे त्रिकोणं तन्मध्ये ह्रस्वोर्ध्वरेखां । तिर्यक्पाशाङ्कुशरेखां च प्रस्तुत्य तस्य सार्वात्म्यप्रतिपादनाच्च । तथाहि कामधेनुतन्त्रे—

"शृणु तत्वं महेशानि ! ककारस्यातिदुर्लभम् ।
रहस्यं परमाश्चर्यं त्रिकोणानाञ्च संशृणु ॥
वामरेखा भवेत् ब्रह्मा विष्णुर्दक्षिणरेखिका ।
अधोरेखा भवेद्रुद्रो मात्रा साक्षात्सरस्वती ॥
अङ्कुशा कुण्डलीया तु कोटिविद्युल्लताकृतिः ।
पाशाकारा कुण्डलिनी मध्यशून्यं सदाशिवः ॥
ककाराज्जायते देवि ! सर्वञ्च वरवर्णिनि ! ।
सर्वेषां देवतानाञ्च कवर्णं मूलमेव च ॥
आसनं त्रिपुरा देव्याः ककारं पञ्चदैवतम् ।
ककारा कामदा कामरूपिणी स्फुरदव्यया ॥

माता सा सर्वदेवानां कैवल्यपददायिनी ।
कैवल्यं प्रदिशेद्यस्मात् कामिनी सा प्रकीर्तिता " इति

के—तस्मिन् ब्रह्मणि ए—"कामोयोनि" रिति श्रुतेस्तन्त्रेष्वपि योनिबीजत्वस्मरणाच्च । एकारस्य विलेखने त्रिकोणाकारत्वस्मरणाच्च । तच्च "यदेकादशमाधारं बीजं कोणत्रयात्मक" मित्युक्तेः । तस्मात् एकारस्सर्वयोनिर्मूलप्रकृतिः । सा च सत्वरजस्तमोमयी एकारस्य त्रिकोणरूपत्वात् तस्य च त्रिरेखात्मकत्वाच्च अकारे ईकारयोजनादेकारस्य सम्भवादकारलक्षिते परब्रह्मणि ईकारार्थस्य मायाशक्तेरधिष्ठितत्वञ्चावगम्यते । अयमेवेश्वरोपाधिः ए—तदवच्छिन्नान्तर्यामी ईश्वरः । के ब्रह्मणीति सप्तम्या अस्तीत्यनुक्त्यैव लाभान्मायाया अनादित्वमनिर्वचनीयत्वञ्चावबुध्यते ।

अथ ई—महत्तत्वं—अस्य "शून्याकाराद्विसर्गान्ताद्बिन्दुप्रस्पन्दसंविद" इत्यादि स्मरणात् कामकलाबीजाङ्गत्वादहङ्कारस्य कारणत्वात् रेफाकारत्रिकोणतदूर्ध्वपार्श्वस्थबिन्दुद्वयाकारविलेखनस्मरणाच्च । अयमेव सत्वप्रधानमायोपाधिस्तदवच्छिन्नो हिरण्यगर्भ ईश्वरश्चेतनाचेतनात्मकसर्वकारणमित्यर्थः ।

अथ—लः—अहङ्कारतत्वं "लिङ् श्लेषण" इति धातोस्सर्वेषां देहादावहमित्याभिमानित्वसम्बन्धादहङ्कारः । लस्य पार्थिवबीजत्वात् पूर्वावस्थातो घनीभूतत्वात् कुण्डलीकृतसर्पाकारेण लेखनस्मरणात् घोररूपत्वाच्च । लकारस्य त्रित्वसङ्ख्यावाचित्वात्सात्विकराजसतामस-

भेदाहङ्कारत्रैविध्यञ्चावबुध्यते । अयमेव मलिनसत्वोपाधिस्तदवच्छिन्नो जीवात्मा । लकारस्य "लूञ् छेदन" इति धातोः छिन्नार्थकत्व-योगान्मलिनसत्वरूपाया अविद्याया अनेकधा विभिन्नत्वादनेकत्वंजी-वानां "लीञ् लय" इति "लूञ् छेदन" इति च धात्वर्थयोगाल्लका-रस्यावरणविक्षेपरूपशक्तिमयत्वञ्च विज्ञायते । तस्माल्लकारार्थावरण-विक्षेपरूपशक्तेस्सकाशात् ह्रीं—ह सत्वगुणं र रजोगुणं ई—तमोगुणञ्च-मातीति ह्रीं हकारेकाररेफविन्दुतत्समष्ट्या च शब्दस्पर्शरूपरसगन्धा-त्मकपञ्चतन्मात्राऽपरपर्यायसूक्ष्मभूतानि सत्वरजस्तमोमयानि जाता-नीत्यर्थः । तत्र हकारश्शब्दवाची "हं क्लीबमस्त्रमुखयोः क्वणिता" इति कोशात् । ईकारः स्पर्शवाची "ई गता" विति धात्वर्थयोगेन वायुवाचित्वात् । रः रूपवाची "रः पुमान् पावक" इति कोशा-दग्निवाचित्वात् । विन्दूरसवाची बिन्दोश्चन्द्रात्मकत्वेन तस्य जल-मयत्वात् । एतेषां चतुर्णां समष्टिः ह्रीं-पृथ्वी गन्धवाची पृथ्व्या आकाशादिभूतचतुष्टयसंहतिजन्यत्वाच्च ।

अथ द्वितीयखण्डे—पूर्वोक्तसूक्ष्मपञ्चभूतसात्विकांशात् हस-कहलानां वियद्वायुतेजोजलपृथ्व्यात्मकानां हकारस्याकाशबीजत्वात् सकारस्य "सः पुंस्युमासुतेवाया" विति कोशात् ककारस्य "कोब्रह्मात्मानिलार्काग्नी" ति कोशात् हकारस्य "हश्शिवे सलिले शून्य" इति कोशात् लस्य "लश्च भूमा" विति कोशात् पृथ्वी-बीजत्वाच्च । तद्वाचित्वात् हसकहलानि तत्तदंशप्राधान्यात् श्रोत्र त्वक् चक्षुर्जिह्वाघ्राणानि पञ्चज्ञानेन्द्रियाणि । ह्रीमिति हकारेफेकारार्थ-

मात्राणां गर्वध्यान चलनमननवाचित्वादहङ्कारबुद्धिमनश्चित्तानां चतुष्टयं च जातम् । अत्र ह्रींकारस्य चिद्बीजत्वादन्तःकरणचतुष्टयस्य ज्ञानेन्द्रियप्रवर्तकत्वं च दर्शितम् । उक्तसुक्ष्मपञ्चभूतराजसांशात् आवृत्या द्वितीयखण्डे—हसकहलनि वाक्पाणिपादपायूपस्थानि पञ्चकर्मेन्द्रियाणि तत्तदंशप्राधान्याज्जातानीत्यर्थः । अत्र ह्रीङ्कारस्य क्रियाशक्तिमत्वात् हकाररेफेकारविन्दुनादरूपपञ्चाक्षरत्वाच्च प्राणादयश्च पञ्चजाता इत्यर्थः । तथा च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणादिवायवः पञ्च अन्तःकरणचतुष्टयं चेति लिङ्गशरीरमासीदित्यर्थः ।

अथ तृतीयखण्डे—सकलानां उक्ततामसांशरूपसूक्ष्मपञ्चभूतानामावृत्या तेषां सकलानां कलासहितानां कलाशब्दस्यांशवाचित्वात् प्रत्येकमर्धांशभूतानां ह्रीं—उक्तपञ्चभूतार्धांशेभ्यः ह्—हरणात् एकैकपादांशहरणात् स्वेतरार्धांशेषु ई—योजनीकरणं पञ्चभूतानां पञ्चीकरणमित्यर्थः ।

“ द्विधा विभज्य चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्चते ॥”

इत्युक्तरीत्या पञ्चीकृतानि पञ्चमहाभूतानीत्यर्थः । आवृत्या सकलैः पञ्चमहाभूतैः ह्रीं ह्रींकारस्य भुवनबीजत्वात् हकारादिवर्णपिण्डात्मकत्वाच्च चतुर्दशभुवनात्मकं ब्रह्माण्डमभूदित्यर्थः । आवृत्या सकलानि ह्—स्वान्तःसमाहृत्य ई विराजमानो ब्रह्माण्डाभिमानी देवो विराडित्यर्थः । एवञ्च सर्वप्रपञ्चजीवेश्वर ब्रह्मतत्वस्वरूपिणी श्रीमहात्रिपुरसुन्दरी श्रीविद्येत्यर्थः ।

## ॥ चतुर्विधैक्यनिरूपणम् ॥

अथोपासकस्य सार्वात्म्यसिद्ध्यर्थं श्रीविद्यादेव तयोरैक्यं । विद्यादेवतयोः श्रीचक्रस्य चैक्यं विद्यादेवताचक्राणामुपासकस्य चैक्यं विद्यादेवताचक्रोपासकानां ब्रह्माण्डस्य चैक्यं । प्रदर्शयिष्यन्नादौ विद्यादेवतयोरैक्यं प्रदर्शयति—तत्र

" श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ।
कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी ॥
शक्तिकूटैकतापन्न कट्यधोभागधारिणी । "

इत्यादिस्मरणाद्विद्यादेवतायोरैक्ये सिद्धेऽपि तत्तदवयवयोरैक्यं विशदयति—प्रथमखण्डे—क इति ककारः श्रीपरदेवतायाश्शिरः कवर्णस्य शिरोवाचित्वादादिमत्वाच्च—एकारः ललाटकर्णपुटरूपः । एकारस्य तेजोवियद्वाचित्वात् । ईकारः नेत्रत्रितयनासापुटरूपः ईकारस्य नेत्रबीजत्वादब्जदलवाचित्वात् बिन्दुद्वयत्रिकोणाकारत्वाच्च । लकारो गण्डयुगलरूपः लकारस्य " लृ " कारेणात्यन्ताभेदात् लृकारस्य गण्डबीजत्वाच्च । ह्रीमिति – ओष्ठपुटरदनपङ्क्तिद्वयजिह्वाघण्टिकाघटितमास्यमित्यर्थः । हकारस्य विसर्गाकारत्वेन विसर्गस्यौष्ठजन्यत्वात् । रवर्णस्योक्तकोशेन तीक्ष्णरूपद्रव्यवाचित्वाच्च । एवं वाग्भवकूटस्य मुखपङ्कजरूपत्वम् ।

अथ द्वितीयखण्डे—हकारः कण्ठदेशः हकारस्य कण्ठजन्यत्वात् शब्दवाचित्वादाकाशबीजत्वाच्च । सकारः स्कन्धप्रदेशः सव-

र्णस्य वायुवाचित्वाच्छक्तिबीजत्वात्त्रिबिन्दुरूपत्वाच्च । ककारः सायुधकरचतुष्टयरूपः कवर्णस्य करबीजत्वात्सवितृशक्तिबीजत्वात् कामिनीतत्वबीजाच्च हकारः पयोधरहृदयप्रदेशः । हवर्णस्य बिन्दुद्वयरूपत्वात् जीववाचित्वात्सूर्यवाचित्वात् । परब्रह्मबीजत्वाच्च । लकारो जठरप्रदेशः लवर्णस्य सुधाकरवाचित्वात् क्षुत्पिपासानिवारकामृताशित्वादिति यावत् । ह्रींकारः पार्श्वपृष्ठकटीनाभिप्रदेशः । अत्र हकारस्यान्तरिक्षबीजत्वात् रवर्णस्याग्निबीजत्वादीकारस्य वायुवाचित्वात् बिन्दोर्वर्तुलाकारत्वाच्च एवं मध्यकूटस्य मध्यदेहमयत्वम् । अथ तृतीयखण्डे सकारः ' ऊरुमूलप्रदेशः सवर्णस्य त्रिबिन्दुरूपत्वात् शक्तिबीजत्वाच्चन्द्रबीजत्वाच्च ककारो जानुद्वयरूपः वायुवाचित्वात्तेजोवाचित्वाच्च । लकारो जङ्घाद्वयरूपः लवर्णस्य पृथ्वीबीजत्वात् । ह्रीं कारः अत्र हकारेण गमनशक्तिमत् रवर्णेन तेजोमयवच्च ईकारेणाब्जदलरूपवत् बिन्दुनाऽर्धचन्द्रकारत्वाच्च । तथा च रक्ताम्बुजवत् कोमलमृदुलशोणितार्धचन्द्रनखरविराजितांङ्गुलीलसितमरालीगमनवद्दिव्यचरणारविन्दयुगलमित्यर्थः ।

अत्र ह्रींकारबिन्दुनिष्टनादादिसूक्ष्मवर्णानां सोमतटित्सूर्यतेजःपुञ्जरूपतया शुद्धमायाशक्तिचिद्रूपत्वात् सर्वाधारान् व्याप्य सूक्ष्मरूपेण परमात्मरूपा विराजत इत्युपदेशरहस्यम् ।

एवमुपासकस्य देहस्याभिन्नत्वं गुरुमुखादवगन्तव्यम् । "नादेवो देवमर्चयेद्देवो भूत्वा देवमर्चये" दित्यादि वचनादेकीभावस्यात्यावश्यकत्वात् ।

अथ श्रीविद्यायाश्चक्ररूपत्वमुपदिशति प्रथमखण्डे — ककारः परब्रह्मरूपत्वाद्बिन्दुरूपः । एकारस्त्रिकोणरूपः तस्य त्रिकोणाकारत्वात् । ईकारो वसुकोणरूपः । ईकारस्य फणिवाचित्वेनाऽष्टत्वसंख्यासिद्धिः । अत्र प्रश्लिष्टेकारस्य सारस्वतशक्तिबीजत्वेन त्रिकोणानां सिद्धिः । एवमष्टकोणरूपत्वात् । लकार अन्तर्दशाररूपः लकारस्य "लः खण्डने त्रिष्वदाने क्लीनेन्दौ लवणे तुल" मिति कोशाच्चन्द्रवाचित्वात् । चन्द्रस्य च जलमण्डलत्वेन "सूर्यरश्मिश्चन्द्रमा" इति श्रुत्या तत्र सूर्यरश्मिसन्निवेशात् तेजः स्वभाववत् । तेजोमयानां बिन्दुत्रिकोणाष्टकोणानां दशानामत्रान्तः प्रभायाः प्रतिफलनादन्तर्दशारत्वसिद्धेः ।

ह्रींकारो बहिर्दशाररूपः । अत्र हकारस्याकाशबीजत्वेन वर्तुलाकारत्वात् बिन्दुर्गृह्यते । रेफस्त्रिकोणं ईकाराद्वसुकोणं एषां दशानां बहिः प्रभाया अस्मिन् बिन्दुमण्डले प्रतिफलनाद्दशकोणात्मकत्वात् । उक्तञ्चेदं कामकलाविलासे "तच्छायाद्वितयमिदं दशारचक्रद्वयात्मना वितत" मिति द्वितीयखण्डे हकारश्चतुर्दशाररूपः हकारस्य विसर्गरूपषोडशस्वरत्वेनाकारस्याप्यत्र सूक्ष्मेण सत्वात्सर्वस्वरमयतया बिन्दुविसर्गयोर्व्यञ्जनरूपत्वेन हानाच्चतुर्दशस्वरात्मकत्वात् । उक्तं च कलाविलासे "आदिस्वरगणचतुर्दशवर्णमयं चतुर्दशार"मिति हवर्णस्य भुवनबीजाङ्गत्वाच्च । सकारः प्रथमवलयरूपः तस्य चन्द्रमण्डलवाचित्वात् । ककारः अष्टदलरूपः ककारस्याष्टवसुवाचित्वात् । प्रकरणबलाच्च । हकारो द्वितीयवलयरूपः हकारस्याकाशचक्ररूपत्वात् ।

लकारः षोडशकलात्मकचन्द्रवाचित्वात् । ह्रींकारस्तृतीयवलयरूपः तस्यावरणमायाशक्तिवाचित्वात् । तृतीयखण्डे—सकार ककार लकाराः भूपुरत्रितयरूपासोमाग्निसवितृशक्तिबीजत्वात् । "तिस्रश्च रेखास्स-दनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशा" इति श्रुतेः । ह्रींकारस्तु सर्वचक्राधिष्ठातृसर्वशक्त्यधिष्ठात्री श्रीशिवकामेश्वरीत्यर्थः ।

॥ अथ ब्रह्माण्डरूपत्वं दर्शयति ॥

ककारादि तृतीयखण्डलकारान्ताश्चतुर्दशवर्णा श्रीचक्रस्य बिन्द्वादिचतुर्दशावयवरूपक्रमेण सत्यलोकादि चतुर्दशलोकस्वरूपा-इत्यर्थः । ह्रींकारस्तु विराट् हिरण्यगर्भान्तर्यामीश्वरब्रह्मस्वरूपा श्रीपर-देवतेत्यर्थः । उक्तं च—ज्ञानार्णवे—

"बैन्दवं ब्रह्मरन्ध्रे तु ललाटे च त्रिकोणकम् ।
भ्रूमध्येष्टारचक्रं स्याद् घण्टिकायां दशारकम् ॥
बहिर्दशारं कण्ठे स्यात् मन्वश्रं हृदयाम्बुजे ।
कुक्षौ तु प्रथमं वृत्तं नाभावष्टदलांबुजम् ॥
कटौ द्वितीयवलयं स्वाधिष्ठाने कलादलम् ।
मूले तृतीयवलयं जानौ प्रथमसम्पुटम् ॥
जङ्घे द्वितीयभूगेहं तृतीयं पादयुग्मके ॥
त्रिपुरा श्रीमहाचक्रं पिण्डात्मकमीश्वरीति" ॥

अथ सर्वजीवेश्वरशक्तिमयमुपदिशति—क इति कः जाग्रदभिमानी विश्वः । ककारस्यात्मवाचित्वात् । एकारस्स्वप्नाभिमानी तैजसः ।

एकारस्य तेजोवाचित्वेन तन्निष्ठत्वात् । ई सुषुप्त्यभिमानी प्राज्ञः ईकारस्य गुहावाचित्वेनाविद्यारूपतया तदवच्छिन्नत्वात् । लुनातीति लः "लूञ् छेदन" इति धातो रविद्या तत्कार्यसम्बन्धविच्छेदनाद-सङ्गस्तुरीय इत्यर्थः । असंगोह्ययं पुरुष" इति बृहदारण्यकश्रुतेः—

"आग्नेय्यपि च सावित्री द्विधोवोष्णे मते मम ।
तयोर्बीजे रलौ देवि तथाभूतेषु च द्वयोः" ॥

इति शैवागमरहस्यवचनात् । लवर्णस्य सवितृशक्तिबीजत्वेन सर्व-प्रकाशकत्वाच्च "जागरितस्थानो वहिःप्रज्ञस्सप्ताङ्ग एकोनविंशति मुखः स्थूलभुग्वैश्वानरः प्रथमः पादः—स्वप्नस्थानोन्तः प्रज्ञस्सप्ताङ्ग एकोन-विंशतिमुखः प्रविभक्तभुक्तैजसो द्वितीयः पादः—यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं—सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः एष सर्वेश्वरः एष सर्वज्ञ एषोन्तर्याम्येष योनिस्सर्वस्य प्रभवाप्ययौ हि भूतानां नान्तः प्रज्ञं न वहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं नाप्रज्ञं न प्रज्ञमदृष्टमव्यवहार्यमग्राह्य मलक्षणमचिन्त्यमव्यपदेश्यमेका-त्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेय" इति माण्डूक्य श्रुतेः । एवं विश्वतैजसप्राज्ञतुर्यस्वरूपा ह्रीं श्रीपरदेवतेत्यर्थः ।

"विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ।
सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविवर्जिता ॥"

इति स्मरणाच्च ।

अथ द्वितीयखण्डे हसेति—हकारस्सूक्ष्माकाशस्तदुपाधिकस्सदाशिवः। सकारः "सः पुंस्युमासुते वाया" विति कोशात् सूक्ष्मरूपो वायुस्तदुपाधिक ईश्वरः। ककारस्सूक्ष्मरूपोऽग्निस्तदुपाधिको रुद्रः। हकारः हकारस्य जलवाचित्वात्

"हश्शिवस्सलिले शून्ये धारणे मंगलेपि च।
गगने नकुलीशे च रक्ते नाके च वर्ण्यते॥"

इति मेदिनीकोशात् सूक्ष्मरूपं जलमित्यर्थः। तदुपाधिको विष्णुः। लकारस्सूक्ष्मरूपा पृथ्वी तदुपाधिको ब्रह्मा। तथाच ब्रह्मविष्णुरुद्रेश्वरसदाशिवरूपिणी ह्रीं श्रीमहात्रिपुरसुन्दरी श्रीपरदेवतेत्यर्थः।

तथाचोक्तं शिवयोगदीपिकायां—

"परमात्मा परंब्रह्म कश्चिद्देवोस्ति चिच्छिवः।
तस्मादुत्पद्यते शक्तिश्शान्त्यतीता कलात्मिका॥
अप्रतर्क्यगुणोपेता जृम्भते सा शिवाज्ञया।
सा शक्तिः पञ्चधा भिन्ना भवति ब्रह्मरूपिणी॥
पञ्चभूतात्मिका नित्या तस्या आसीदिदं जगत्।
आदौ व्योम्नि स्थिता भाति साक्षादेव सदाशिवः॥
सदाशिवादीश्वरोऽपि सम्भूतः पवने स्थितः।
ईश्वरादभवद्रुद्रो वह्निसंस्थः प्रतापवान्॥
रुद्राद्विष्णुर्महातेजा वारितत्त्वे व्यवस्थितः।
विष्णुरूपोत्थितो ब्रह्मा पृथ्वीतत्त्वे व्यवस्थितः॥

एवं पराशक्तिजाताः विश्वपाः पञ्चमूर्तयः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥
शान्त्यतीतकलेत्येता स्थिता ब्रह्मादिमूर्तिषु ।
तया शिवाज्ञया ह्येते वर्तन्ते सुमहोज्वलाः ॥"

इति तस्मात्सृष्टिस्थितिसंहारतिरोधानानुग्रहकारिणी श्रीविद्येश्वरीत्यर्थः ।

तथा च नाम स्मर्यते—

"सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ।
संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ॥
सदाशिवानुग्रहदा पञ्चकृत्यपरायणा ।" इति

अथ तृतीयखण्डे—सकारः सरस्वतीदेवी सकारस्य तद्बीजत्वात् ।

"कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः ।
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः ॥"

इति ललितात्रिशत्यां स्मरणात् ।

"वेधो भारत्यौ माधवलक्ष्म्यौ रुद्रपार्वत्यौ रेफान्तवर्णषट्कस्यार्थान् क्रमशो विजानीया" दिति—वरिवस्यारहस्योक्तेश्च । ककारो गौरीदेवी तस्य कामिनी तत्वबीजत्वात् उक्तकामधेनुतन्त्रस्मरणाच्च । लकारो लक्ष्मीदेवी तस्य तद्बीजत्वात् । "ला सामा श्री" रित्यमरशेषकोशाच्च । आवृत्या सकलाः सरस्वती गायत्री सावित्री स्वरूपाः

देव्यः । समिति सरस्वतीबीजत्वात् केति सूर्यद्युतिशक्तिबीजत्वात् लेति सूर्यनिष्ठसावित्रीशक्तिबीजत्वाच्च विज्ञेयाः ।

एवं महापदपूर्विका महासरस्वती महाकाली महालक्ष्मी देव्यश्चेत्यर्थः । महाकाल्यादीनां स्वरूपादिविशेषस्सप्तशतीरहस्यत्रितयादाववगन्तव्यः । सकलाः ज्ञानेच्छाक्रियाशक्तयः "सं क्लीबे स्यन्दनपथे ज्ञाने" त्युक्तकोशात्सकारस्य ज्ञानार्थकत्वात् तृतीयखण्डस्य शक्तिकूटत्वाच्च । सकारः ज्ञानशक्तिः ककार इच्छाशक्तिः "कमु-कान्ता" विति धातोः क्विप् । अस्येच्छार्थकत्वात् । लकारः क्रियाशक्तिः "लाऽदान" इति धात्वर्थादुपलक्षणेन क्रियारूपत्वाच्च । एवं वामाज्येष्ठा रौद्रीरूपाः सकलाः सकारो वामाशक्तिः वमति स्वान्तस्थमिति वामापदव्युत्पत्तेः । सौति प्रसूत इति "षुप्रसव" इति धात्वर्थव्युत्पत्तेश्च एकार्थत्वात् । ककारो ज्येष्ठाशक्तिः ककारस्य मातृकावर्णेषु हलां ज्येष्ठत्वात् । लकारः रौद्रीशक्तिः "लीञ् लय" इति धातोर्लीयते विलीयतेऽनयेति प्रलयकारिरुद्रशक्तिरूपत्वात् ।

सात्त्विकी राजसी तामसी रूपाश्शक्तयस्सकारस्य ज्ञानशक्तिरूपत्वात् । ककारस्येच्छाशक्तिरूपत्वात् लकारस्य विलयकारित्वाच्चेत्यर्थः । सकलाः पश्यन्ती मध्यमा वैखरीरूपास्तिस्रश्शक्तय· उपरितन ह्रींकारस्य पराशक्तिरूपत्वात् । सकारः पश्यन्तीशक्तिस्सकारस्योक्तकोशेन ज्ञानार्थकत्वात् । उच्चार्यमाणवर्णविभागविज्ञात्रीत्यर्थः । पश्यत्युच्चार्यमाणवर्णविभागं जानातीति पश्यन्तीपदव्युत्पत्तेः ।

क्कारो मध्यमाशक्तिः "कनदीप्ता" विति धातोः पूर्वावस्थातो किञ्चिद्व्यक्तशब्दरूपेण प्रकाशमानत्वात् । लकारो वैखरीशक्तिः "ला आदान" इति धात्वर्थयोगेन स्थूलशब्दस्यश्रोत्रेन्द्रियग्राह्यत्वात् ।

अत्रेदमवधेयं—परानामात्यन्तसूक्ष्मानादशक्तिरुच्चार्यमाणवर्णानां परमकारणरूपिणी मूलाधारान्नाभिपर्यन्तव्यापिनी परमयोगिभिरेवावगन्तव्या । पश्यन्तीनाम सूक्ष्मरूपा वर्णविभागविज्ञानजननी शक्तिर्नाभेर्हृदयपर्यन्तव्यापिनी योगिभिरवगन्तव्या । मध्यमानाम पश्यन्त्यवस्थातो किञ्चिद्व्यक्तनादरूपावैखरीरूपशब्दावस्था तत्सूक्ष्मरूपाशक्तिर्हृदयात् कण्ठपर्यन्तव्यापिनी सूक्ष्मबुद्धिभिरवगन्तव्या । वैखरीनाम विशेषेण खं श्रोत्रेन्द्रियं राति प्राप्नोतीति विखरी विखर्येव वैखरी वै निश्चयेनेति वा योज्या । विखरं कठिनं घनीभावं प्राप्ता वैखरीति वा विज्ञेया सा कण्ठ्यताल्व्यादिरूपेण वहिरुच्चार्यमाणा श्रोत्रेन्द्रियग्राह्या स्थूलवर्णात्मिका शक्तिः ।

॥ अत्रेदं मानम् ॥

"चत्वारि वाक्परिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहात्रीणि निहितानेंगयन्ति तुरीयं वाचो मनुष्या वदन्तीति" । "तस्माद्यद्वाचो नाप्तं तन्मनुष्या उपजीवन्ती" ति च श्रुतिः ।

"मूलाधारात् प्रथमसुदितो यश्च भावः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।
व्यक्ते वैखर्यथ रुरुदिषोरस्य जन्तोस्सुषुम्ना-

बद्धस्तस्माद्भवति पवनप्रेरिता वर्णसंज्ञा" ॥ इति श्रीशङ्कराचार्यवचनम् ।

"मूलाधारे परा प्रोक्ता पश्यन्तीनाभिसंस्थिता ।
मध्यमा बुद्धिसंयुक्ता अष्टस्थानेषु वैखरी" ॥

इति शीक्षावचनञ्च ।

एवं सकला सर्वशक्तिमयी ह्रीं पराशक्तिः श्रीराजराजेश्वरी समस्तजीवसर्वदेवेश्वराखिलशक्तिस्वरूपिणी श्रीपरदेवतेत्यर्थः ।

॥ अथ श्रीपुरम् ॥

श्रीमहात्रिपुरसुन्दर्यास्सर्वाधिष्ठानत्वेन सर्वान्तर्यामित्वेऽपि भक्तानुजिघृक्षया लीलाविग्रहधारिण्याः श्रीललिताम्बिकायाः दिव्यविग्रहनिवासस्थानं श्रीपुरम् । यत्र तदुपासकाश्च समधिगच्छन्ति । तच्च श्रीपुरं त्रिविधं—तत्रैकमनेककोटिब्रह्माण्डोपरिस्थितं महाश्रीपुरम् । तदुक्तं रुद्रयामलादौ—

"अनेककोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः ।
सहस्रकोटिविस्तीर्णे सुधासिन्धोस्तु मध्यमे" ॥

इत्यादिना द्वितीयं भूमण्डलसन्निविष्टषोडशक्षेत्रेषु षोडशनित्यादेवीसंज्ञिकेषु श्रीपुरेषु प्रधानं महामेरुसंस्थं पुरम् । तदुक्तं सम्यक् ब्रह्माण्डपुराणे आर्याद्विशत्यादौ ।

तृतीयन्तु क्षीराब्धिमध्यसंस्थमन्यद्विशिष्टं पुरम् । तदुक्तं श्रीशङ्करभगवत्पादाचार्यविरचितश्रीविद्यारत्नभाष्ये—

ननु श्रीपुरस्य तन्त्रेषु पुराणादिष्वपि प्रसिद्धत्वेऽपि न श्रुति-प्रसिद्धत्वमिति शङ्क्यम्

"स देवीपदमाप्नोती" ति देव्यथर्वशीर्षोपनिषदि श्रवणात् ।

"नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरञ्चाविशन्ती"

त्यादि ऋग्वेदीयत्रिपुरोपनिषदि श्रवणाच्च । नाकस्य पृष्ठेत्यादिश्रुते-रयमर्थः । महतो नाकस्य पृष्ठे सर्वदेवलोकोपरि ब्रह्माण्डोपरीत्यर्थः । परं धाम त्रैपुरं त्रिपुरायाः श्रीपरदेवतायाः श्रेष्ठं पुरं महाश्रीपुरं तत्र वसन्ति बहवो महान्त इत्यर्थः । महत इति प्रथमार्थे वा द्वितीया अद्यापि महान्तस्तत्राविशन्ति प्रविशन्तीत्युदाहृतश्रुत्यर्थ योगात् किञ्च—

"उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्यो ह्यनुज्ञाता गच्छ देवि यथासुखम्" ।। इति

श्रुत्यन्तरात् । "अष्टाचक्रानवद्वारा देवानां पूरयोध्या तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽवृतः यो वै तां ब्रह्मणो वेद—अमृतेना-वृतां पुरीं तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्तिं प्रजां ददु" रिति श्रुते-श्चास्या अष्टाचक्रा नवद्वारेत्यारुणिकीश्रुतेरयमर्थः—श्रीचक्रस्य श्रीपुर-स्यापि वैभवं दर्शयति—अष्टाचक्रेति—अष्टाचक्राणि त्रिकोणवसुकोणा-न्तर्दशारवहिर्दशारमन्वश्राष्टदलषोडशदलभूपुरत्रयरूपाणि यस्यास्सा वृत्तत्रयस्य पद्मद्वयेऽन्तर्भावात् । "ऊर्ध्वं ज्वलज्ज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनं अजरन्तद्रजोभूत्—आनन्दनं मोदनं ज्योतिरिन्दो-

रेता उवै मण्डला मण्डयन्ती''ति त्रिपुरोपनिषच्छ्रुतेः । नवद्वारा नव द्वाराणि यस्यास्सा । ऊर्ध्वं शिवकोणचतुष्टयमधश्शक्ति कोणपञ्च-कञ्चेति पूः पुरं श्रीचक्रमित्यर्थः । "चक्रं पुरञ्च सदन" मिति विश्व-कोशात् । श्रीविद्यारत्नभाष्ये गौडपादीयसूत्रतद्भाष्येऽन्यव्याख्यानेषु च दर्शनात् देवानामप्ययोध्या योद्धुमशक्या किमु मर्त्यानामित्यर्थः । हिरण्मयः कोशस्स्वर्गो लोको ज्योतिषाऽवृतः—हिरण्मयः सुवर्णमय-स्तेजोमयः कोशो बिन्दुः—स्वर्गो लोकः आनन्दलोकः ज्योतिषा परं-ज्योतिषा परब्रह्मणेत्यर्थः । आवृतो व्याप्तः यः पुरुषस्तां पुरं श्रीचक्रं ब्रह्मण इति वेद विजानाति । किञ्च ब्रह्मणो यथा चक्रमधिष्ठानं तथा चक्रस्य श्रीपुरम् । अमृतसमुद्रावृतमधिष्ठानमित्याह—अमृतेनामृतसमु-द्रेणेत्यर्थः । आवृतां परितो व्याप्तां सुधासिन्धुमध्यस्थत्वाद्रत्नद्वीपस्थितां पुरीं श्रीनगरीमित्यर्थः । तस्मै तथा विदुषे ब्रह्म च त्रिपुरसुन्दर्याख्यं ब्रह्मा च कामेश्वरः "ब्रह्मा शिवो मे अस्तु सदा शिवो''मिति श्रुतेः । आयुर्दीर्घायुष्यं कीर्तिं विद्याधर्मसम्पज्जनितकीर्तिमित्यर्थः । प्रजां सन्ततिं ददुः पूजार्थे बहुवचनं पूर्णतया दिशतीत्यर्थः ।

॥ तादृशं श्रीपुरं दर्शयति ॥

प्रथमखण्डे—ए—अनेककोटिब्रह्माण्डोपर्याकाशे—

"एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ ।
व्योम्न्येकादशसंख्यायाम् ॥" इत्युक्तनानार्थरत्नमाला-भिधानात् । के—सुधासमुद्रे कवर्णस्य समुद्रवाचित्वात् । क्षीरसमुद्र

इति चार्थः । क्षीरसमुद्रेऽपि श्रीपुरान्तरकथनात् । मेरुसंस्थमप्यनेनैव दर्शयति—एकारे प्रश्लिष्टाकारे योजिते 'ऐ' इति सिद्ध्यति ॥

"ऐकारो दिङ्मुखे हस्ते हरेऽद्रिशिखरे त्वची"ति कोशात् । महामेरुशिखरइत्यर्थः । अत्र विभक्तिलोपश्छान्दसः । अत्र ब्रह्माण्डोपरिस्थितस्य क्षीरसमुद्रस्थस्य मेरुनिष्ठस्य च श्रीपुरस्य विस्तीर्णव्यत्यासेऽपि आकारसमानत्वात् ब्रह्माण्डोपरि सुधासमुद्रे क्षीरसमुद्रे चेत्यर्थः । आवृत्या ए—सप्तमी अकारस्याङ्कणवाचित्वाद्रत्नद्वीपाङ्कणइत्यर्थः ।

अथ तृतीयखण्डमन्वेति—सकलेति कलाः पञ्चविंशति तत्वानि कलाशब्दस्यागस्त्यमहामुनिविद्याभाष्ये तत्वार्थकत्वनिरूपणात् । ह्री मव्ययं मायाया आवरकत्वस्वभावात् वरणाः तथा च पञ्चविंशतितत्वरूपप्राकारसमेत इत्यर्थः ।

"पञ्चविंशतितत्वात्मपञ्चविंशतिवप्रकै"रिति रुद्रयामलस्मरणात् ।

अथ प्रथमखण्डे—ईल ह्रीं इ—ई—इ—ई—ल ह्रीमिति छेदः । "ईकारोऽब्जदले लक्ष्म्या"मिति कोशादीकारस्य पद्मदलवाचित्वेन तदुपरिप्रश्लिष्टेकारस्य प्राप्त्यर्थकतया ई पद्मानीत्यर्थः । पूर्वप्रश्लिष्टेकारस्य "इस्याच्चित्रकभेदोक्त्यो"रिति कोशात् इ विचित्राणि ई—पद्मानीत्यर्थः । ईभिः "अकस्सवर्णे दीर्घ" इति सूत्रादनेकपद्मद्रुमैः—ळं विचित्रपद्मद्रुमविशिष्टं वनमित्यर्थः । वैशिष्ट्ये लच्च प्रत्ययः ।

तस्मिन् महापद्मवने ह्रीं चिन्तामणिगृहमित्यर्थः । "ह्रींकाररूपा ह्रींकारनिलये"ति त्रिशत्यां नामस्मरणात् । ह्रींकारस्य बीजरत्नस्य देव्यावासस्थानत्वाच्च तस्मिन् चिन्तामणिगृहे ।

द्वितीयखण्डे—हसकहलानां सदाशिवेश्वररुद्रविष्णुब्रह्मणां समाहारो हस कहलम् । पञ्चब्रह्मात्ममञ्चसिंहासनं तत्सहितं ह्रीं श्रीचक्रम् ।

तथा च—उक्तसुधासिन्धुमध्यस्थरत्नद्वीपस्थितपञ्चविंशति-प्राकारसमावृतमहापद्मवनान्तस्थचिन्तामणिगृहनिष्ठश्रीचक्रबिन्दुमध्य-निविष्टपञ्चब्रह्ममयसिंहासन इति यावत् । श्रीचक्ररूपत्वं तु ह्रींकारस्य त्रिरावृत्योच्यते । तत्र ह—आकाशबीजत्वाद्बिन्दुः । र—त्रिकोणं तस्या-ग्निबीजत्वात् । ई—अष्टकोणं ईकारस्य लक्ष्मीवाचित्वेनाष्टलक्ष्मीति प्रसिद्ध्याऽष्टसंख्यालाभात् । तस्य पराशक्तिबीजत्वेन त्रिकोणरूप-ग्रहणाच्च । म्—मकारश्चन्द्रः "मश्शम्भौमातरिन्दौ ना" इति रत्न-मालाभिधानात्तस्य चन्द्रवाचित्वात् । बिन्दुत्रिकोणवसुकोणानां दशा-नामत्र बिन्द्वाकारसलिलमण्डलात्मकचन्द्रेऽन्तर्बहिश्च प्रतिफलनाद्दशार-द्वितयम् । आवृत्या—ह—चतुर्दशस्वराः मन्वश्रं तच्च पूर्वमुक्तम् । र—,'रं क्लीवे रुधिरे मूर्ध्निध्यानव्योमाण्डकुक्षिष्वि" त्युक्तकोशात्—रस्याकाशवा-चित्वेन वर्तुलाकारत्वात्त्रिवलयं गृह्यते । अत्र वलयत्रितयस्याष्टदलषो-डशदलमर्यादावृत्तरूपत्वं पूर्वमुक्तम् । ईकारोऽष्टदलकमलमीकारस्याष्टसं-ख्यापद्मदलयोर्वाचित्वात्—म् — चन्द्रः षोडशदलं तस्य षोडशकला-रूपत्वात् । तृतीयावृत्या—हः—सूर्यः रः— अग्निः ई चन्द्रः ईकारस्य

चन्द्रकिरणवाचित्वेन अत्र प्रश्लिष्टेकारस्य विशिष्टार्थकत्वात् । तथा च सूर्याग्निचन्द्रमयं भूपुरत्रितयं म् — माति वहतीति ह्रीं — श्रीचक्रमिति पूर्वोक्तपञ्चब्रह्ममयसिंहासने । तृतीयखण्डे — सकलास्वांशभूतनवावरणचक्राधिष्ठितसर्वशक्तिसमेता । ह्रीं सर्वजनमनोहरी सर्वाभीष्टप्रदात्री श्रीललितांबिका पराशक्तिस्सर्वदा विराजत इत्यर्थः ।

उक्तपञ्चब्रह्मात्मकसिंहासने नित्यसन्निहितायाः श्रीललिताम्बिकायाः दिव्यमङ्गलमूर्तिध्यानप्रकारं दर्शयति—

प्रथमखण्डे — एकारप्रश्लिष्टाकारोऽल्पार्थकोऽत्रान्वेति । कः — आदित्यः । तथा च बालार्क इत्यर्थः । तस्य — ए — तेज इव तेजो यस्यास्सा क — ए — अत्र प्रग्रहस्सन्धिश्छान्दसः । उद्यद्भानुप्रभेत्यर्थः । ईल ह्रीं — ई — इल — ह्र — ई — म् — इति छेदः । ई बाणाः पञ्च पुष्पबाणा इत्यर्थः । इलेति इल्यते क्षिप्यतेऽऽनेनेति इलं धनुरिक्षुचापमित्यर्थः । "इल स्वप्नक्षेपणयो" रिति धातोर्निष्पन्नम् । ह्र — ह्रीयते आकृष्यतेऽनेनेति ह्र । हरणसाधनमङ्कुश इत्यर्थः । "हृञ् हरण" इति धातोः क्विप् । ई पाशः "ईगता" विति धातुः । तान् ईल ह्रीन् बाणचापाङ्कुशपाशान् । म् — माति वहतीति । ईल ह्रीं पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करेत्यर्थः । किञ्च — आवृत्या ईल ह्रीं — इ — ई — ल — ह्रीं — इति छेदः — "इकारः फणरत्नार्चिष्वि" ति कोशात् इ — पद्मरागरत्नकान्तिः । ई — तत्कान्तिमदित्यर्थः । लं डं वस्त्रं डकारस्य लकारादेशस्मरणात् । यस्यास्सा ईडा

सा च ह्रीं च ईड ह्रीमिति समासः । "डं क्लीबे डामरे दुर्गे पटे डमरुकेऽपि चे" ति रत्नमालाभिधानात् । दिव्यारुणकौसुम्भवस्त्रान्वितेत्यर्थः । अत्र ह्रीमव्ययं ह्रीर्लज्जा तां मातीति मन्दस्मितकाले किञ्चिल्लज्जावती तस्या बहुमनोहरत्वात् कुलाङ्गनात्वाच्च किञ्चिल्लज्जापूर्वकस्मितवती कुलाङ्गना महापतिव्रतेत्यर्थः ।

द्वितीयखण्डे — हरुकाः सूर्यसोमाग्नयः नेत्रत्रितयरूपेण यस्मिंस्तत् — हसकं — हं — मुखं लं — चन्द्रमण्डलमिवेत्युत्तरपदसमासः । हसकं हलं यस्यास्सा हसकहला । सूर्यसोमाग्निरूपनेत्रत्रितययुङ्मुखचन्द्रवतीत्यर्थः । किञ्चावृत्या हसकं सस्मितं हं — मुखं हसकहं तत्र लं ललाटे चन्द्रमण्डलाकारं कस्तूरीतिलकं यस्यास्सा । मन्दस्मितमुखलालाटिककस्तूरीतिलकवतीत्यर्थः । किञ्चावृत्या हेन रत्नरोचिषा सं व्याप्तं हसं "सल गता" विति धातोः क्विप् । लक्षणया नवरत्नखचितहाटकमकुटमित्यर्थः । तत् के — शिरसि यस्यास्सा हसका रत्नमकुटमण्डितशीर्षेत्यर्थः । हं — वीणानादवत् लं — आलापो यस्यास्सा हला । हसका च हला चेति हस कहला "हं क्लीबमस्त्रमुखयोः कणिते मणिरोचिषी" ति कोशात् । "लप् आलपन" इति धातोः क्विप् । तस्य लपनार्थकत्वात् । वीणानादसदृशालापवतीत्यर्थः । किञ्चावृत्या — हसकान् ब्रह्मविष्णुरुद्रानपि हलते पुत्रत्वेन गृह्णातीति वा हसकहला । सा च ह्रीश्चेति समासः । ह्रीं श्रीकामेशोत्सङ्गवासिनी चेत्यर्थः । ह्रींकारस्य कामेशोत्सङ्गवासित्वन्तु हः शिवः रः कामः ह्रः शिवकामः । तत्र तदुत्सङ्ग इत्यर्थः ।

ई गत्यर्थकत्वात् स्थितेति । अत्र प्रश्लेषात् ई श्रीपराशक्तिः श्रीकामेशोत्सङ्गवासिनी श्रीपरदेवतेत्यर्थः ।

अथ तृतीयखंण्डे – सकलानां ह्र – हृदयं तत्र ई प्रकाशमाना सत्यज्ञानानन्दब्रह्मात्मिका चिच्छक्तिः सर्वसाक्षिणीत्यर्थः । किञ्च कलया सहिता चन्द्रकलाधरेत्यर्थः । किञ्च कलाभिश्चतुःषष्टिकलाविद्याभिस्सहितेति वा ह्रीं – ह – ब्रह्मा र – विष्णुः ई – रुद्रः एतेषां प्रश्लेषात् ई – वाणी लक्ष्मी रुद्राणीति शक्तयः । ताः माति निर्मातीति म् – वाण्यादिसर्वशक्तिजननी श्रीपरदेवतेत्यर्थः । स्वभक्तेभ्यस्सर्वं हरति धारयतीति वा – सकल ह्रीं – सकलानां सर्वेषां ह्र – संहरणं ई – संरक्षणं – अत्र प्रश्लिष्टेकारस्य निर्माणं – एतानि माति निर्मातीति म् – सर्वसृष्टिस्थितिसंहारकारिणी श्रीपराशक्तिरित्यर्थः ।

किञ्च – सकल ह्रीं – इत्यत्रागस्त्यमहामुनिभाष्योक्तरीत्या सकलह्रीमिति गृह्यते । सं – सकारस्य चन्द्रबीजत्वात् चन्द्रमण्डलवद्वृत्ताकारं श्वेतवर्णं “सं क्लीवे स्यन्दनपथे ज्ञाने ध्याने निवारण” इति रत्नमालाभिधानात् । सकारस्य निवारणार्थकत्वेन वर्षातपनिवारकत्वात् श्वेतातपत्रमित्यर्थः । कले – कवर्णस्य सितवर्णवाचित्वात् पवनवाचित्वाच्च कानि सितवर्णानि पवनोत्थापकानि च लानि बालानि नामैकदेशे नामग्रहणमिति न्यायात् चमरीबालानि ययोस्ते चामरइत्यर्थः । किञ्च ककारस्य मयूरवाचित्वात् कस्य मयूरस्य लानि बालानि पिञ्छानि लवर्णस्य चन्द्रवाचित्वात् वृत्ताकारतया ययो-

स्सन्ति ते पिञ्छव्यजन इत्यर्थः । ह्रीं – उक्तानि श्वेतच्छत्रचामर-पिञ्छव्यजनानि ह्रीभिर्हारिणीभिर्धारिणीभिश्शक्तिभिरित्यर्थः । मीयते सेव्यत इति म् ईदृशशक्तिसेविता श्रीपराशक्तिरित्यर्थः । अत्रायं विवेकः श्वेतच्छत्रधारिणी – ई – विजयाख्या स्वपार्षदी शक्तिः चामरधारिण्यौ प्रश्लिष्टस्य – ईकारस्य "ईकारोऽब्जदले लक्ष्म्यां वाण्या" मित्युक्तकोशाल्लक्ष्मी वाणी शक्तीत्यर्थः । पिञ्छ-व्यजनधारिण्यौ हरिश्च इश्च इन्द्रमन्मथौ तयोः ई – इन्द्राणी शक्तिः रती शक्तिश्चेति । सहस्रनामाध्याये – "सचामररमावाणी सव्य-दक्षिणसेविते" त्युक्तस्य – मातृकापुष्पमालास्तवे ।

"लक्ष्मीमौक्तिकलक्षकल्पितसित—
छत्रन्तु धत्ते रसा—
दिन्द्राणी च रतिश्च चामरवरे
धत्ते स्वयं भारती वीणाम् ॥"

इत्युक्तस्य च नान्योन्यविरोधः । लक्ष्म्यादिसर्वशक्तीनां राजराजेश्वरी-परिचर्यायामत्यन्तलालसतया यथा प्रस्तुतं परिचर्याकृत्यभेदसम्भ-वात् । तथान्यत्र स्मरणाच्च–लक्ष्मीवाणीन्द्राणीरतीदेवीनां कृत्य-भेदेऽपि छत्रधारणकृत्यस्य सहस्रनामाध्यायेऽनुक्तिः मातृकापुष्पमा-लायां श्रीदेव्याः छत्रधारणमुक्तम् । विजयाख्यशक्तेः छत्रधारणन्तु प्रस्तुतभेदादुक्तमवगन्तव्यम् । पिञ्छव्यजनधारणं न दृष्टमिति शंक्यं – रुद्रयामलोक्तदिव्यमङ्गलध्याने "मणिवीणां शुकं शारीं

तालवृन्तं कमण्डलु" मिति स्मरणात्। व्यजनोपचारस्यावश्यकतया इन्द्राणीरतीदेव्योः कादाचित्कं पिञ्छव्यजनयुग्मधारणं समुचितमेवेत्युपदेशः।

"एवं भूतां सदा ध्यायेत् सर्वाभीष्टप्रदायिनी" मिति ध्यानं प्रदर्शितम्।

अथैतादृशीं परदेवतां पूजयितुं तत्स्थानानि दर्शयति—

तत्र तावत् पूजा द्विविधा साधारा निराधारा चेति। तत्र निराधारा नाम "संविदेवाह" मित्यवस्थानम्। चिदेवाहमिति चिन्तनं वा। अत्र विद्याखण्डेषु विद्यमानमायाबीजबिन्दुषु तत्तत्खण्डार्थानां समर्पितत्वात्तादृशबिन्दुत्रयरूपाऽहार्णकामकलात्मकाहं पदलक्ष्यचैतन्यं-ब्रह्मैवाहमस्मीत्यनुसन्धानमेव। तदाभिहितं सूतसंहितायां—

"साधारा च निराधारा निराधारा तु संविदि"ति।

साधारा च बाह्यान्तरभेदेन द्विविधा तदुभयमपि स्थानं दर्शयति—

प्रथमखण्डे – के चित्ते मन्त्रे आधारादिचक्रे वा। कवर्णस्योक्तकोशेन तत्तद्वाचित्वात्। ह्रीं दिव्यतेजोवर्णनादरूपां ए–मानस-गन्धाद्युपचारैः एकारस्य जलतेजोव्योमवाचित्वात् ईल सञ्चिन्त्य पूजयेत्यर्थः। आवृत्या वहिःस्थानज्ञानेनैव दर्शयति – के – आदित्य-चन्द्राग्निदीपादौ। ए हर्म्योदरे देवालयादौ। यद्वा ए–अकारसप्तमी चत्वरे स्थण्डिले पीठे पद्मे वा – ह्रीं पाषाणलोहमणिदारुमृदाभि-

र्निर्मितविग्रहरूपां "पाषाणलोहमणिमृण्मयविग्रहेषु पूजा पुनर्भोगकरी" ति श्रुतेः। ह्रींकारस्य "ह्रीं शरीरिणी"ति देवीशरीरत्वोपपादनात्। किञ्चात्र हकारेण पादौ रवर्णाद्धस्तौ ईकारस्य त्रिकोणं नाभिकुक्षिहृदयं पार्श्वविन्दुद्वयं पयोधरद्वन्द्वमूर्ध्वविन्दुर्मुखारविन्दं च गृह्यते। हकारस्य गत्यर्थकत्वेन गमनसाधनत्वात्। रवर्णस्य "रः पुमान् पावके कामे क्षयवज्रशयेष्वि" ति शयशब्दस्य "पञ्चशाखः शयः पाणि" रिति हस्तवाचित्वात्। त्रिकोणस्य वह्निबीजात्मकरवर्णरूपत्वात्। "रं क्लीबे रुधिरे मूर्ध्नि ध्याने व्योमाण्डकुक्षि"ष्विति कोशात् जठरवाचित्वात्। विन्दुद्वयस्य मण्डलाकारतया पयोधरयुग्मग्रहणात्। ऊर्ध्वविन्दुर्मुखं "ऊर्ध्वविन्दुस्तु वक्त्रं स्यादधोविन्दुस्स्तनद्वय" मिति तरंगिणीस्मरणाच्च। किञ्च—ह्री – ह – तस्य रुद्रवाचित्वेन रजतदेवताकत्वाद्रजतं गृह्यते। र – तस्याग्निवाचित्वात्तैजसं स्वर्णं गृह्यते। तथा च ह्र – रजते स्वर्णे वा तन्मिलिते वा ई— श्रीचक्रं विलिख्य तत्र देवीं ईळ सम्पूज्य स्तुहीत्यर्थः। "द्वामण्डला द्वास्तना विंबमेकं मुखञ्चाधस्त्रीणि गुह्यासदनानी"ति श्रुतेः। ईकारस्य विग्रहत्वचक्ररूपत्वस्मरणात्। यद्यपि मेरुचक्रमेव गृहस्थस्य पूजनीयमिति तन्त्रेषूक्तं तथापि "नवरेखा स्वरमध्यं तदीडे" "तिस्रश्च रेखास्सदनानि भूमे" रित्यादि श्रुत्युक्तत्वात्। विलिखितमेव श्रीचक्रं वाह्यपूजायां सर्वेष्वप्युत्तमोत्तमं विज्ञायते।

अथ श्रीचक्रलेखनक्रमं दर्शयति—तृतीयखण्डे—सकलञ्च तत् ह्रीञ्चेति समासः। सकलं कलाभिः षण्णवत्यंशैस्सहितम्। षण्ण-

वत्यंशायामसमेतं ह्रीं—श्रीचक्रं ह्रींकारस्य चक्रात्मकत्वं पूर्वमुक्तम्। कलाशब्दस्यागस्त्यमुनिना तत्वार्थकत्वस्मरणादत्र षण्णवतितत्वग्रहणात् षण्णवतिसङ्ख्या लक्ष्यन्ते किञ्च

"कलास्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके।
षोडशांशे च चन्द्रस्य कलना कालमानयोः"
"कलंशुक्रे त्रिष्वजीर्णे नाड्योक्तमधुरध्वनौ"॥

इति मेदिनीकोशात्। अंशार्थकत्वस्मरणाच्च। अस्मिन् खण्डे—अक्षरचतुष्टयवत् षण्णवत्यंशमानेऽपि चतुर्विंशतिरूपभागचतुष्टयं ग्राह्यम्। अत्र ह्रीमिति संयुक्तबीजाक्षरवदान्तरचतुर्विंशतिरूपभागद्वयं संयोज्याष्टचत्वारिंशदंशविस्तीर्णम्। आवृत्या सकलं—चन्द्रमण्डलं तद्वद्वृत्तं कुर्यादित्यर्थः। तदा "व्यासे देवीकृते" त्याद्युक्तिरपि युज्यते। बाह्यस्थचतुर्विंशतिभागद्वयं एकस्य चतुर्विंशत्यंशरूपभागस्य विभागप्रदर्शनादेवान्यभागस्य विभागसिद्धएवेति निधाय विदधाति ह्रीमिति—ह्—रुद्रः लक्षणया एकादशांशः रः—अग्निः ततस्त्रिः विन्द्वादितो गणनात्तृतियत्वाच्च त्रिः। एवं त्रिस्त्रिर्नवांशाः। ई—तस्य चतुर्थाक्षरत्वाच्चतुरंशाः—म्—एतदंशान् माति वहतीत्यर्थः।

अत्रैकादशांशमानं वृत्तं विलिख्य तत्राष्टदलानि विलिखेत्। तच्च पद्मदलवाचीकारस्य सम्पर्कादपि द्योत्यते। तथा नवांशमानं वृत्तम्। अत्र षोडशपद्मदलानि विलिख्यावशिष्टांशचतुष्टयेन चतुरश्रत्रयं चतुर्द्वारसमोपेतं विलेखनीयमित्यर्थः। अथोक्ताष्टचत्वारिंशायाम-

वृत्ते नवरेखादिविलेखनं दर्शयति—द्वितीयखण्डे—हसकहलेति पञ्च। ह्रीमित्यस्य वियदीकाराग्निविन्दुसमायोगाच्चतुरक्षरत्वाच्चत्वारि । एवं नवाक्षराणि । तद्रूपा नवरेखाः विलेख्याः । तत्र रेखाविलेखनेऽयमंशविभागः । अत्र ह्रींकारस्य हकाररेफौ द्वौ उपरितनस्य ईंकारस्य त्रिकोणं विन्दुत्रयमिति चत्वार आहत्य षड् एवं षडवयवरूपत्वात् षडंशा गृह्यन्ते । अस्य चतुर्वर्णात्मकत्वात् षडंशमानेन द्वे रेखे उपरि द्वे रेखे उक्तांशमानेनाधस्ताच्च एवं चतस्रो रेखा विलेखनीया इत्यर्थः । एतद्बीजाक्षरस्यैव वियदीकाराग्निविन्दुनादरूपपञ्चावयवत्वात् पञ्चांशमाना उपरितनषडंशरेखाद्वयस्याधस्ताद्वृत्तस्पर्शी तृतीया रेखा विलेख्या । ह्रीं—वीजस्य ह्री—म्—इति स्थूलसूक्ष्मभेदेन द्वैविध्यात् ह्रीति स्थूलवीजस्य हकाररेफेकाररूपत्र्यवयवात्मकत्वेन त्र्यंशमानेन पञ्चांशमानरेखायाऽधस्तात् द्वे चतुर्थीपञ्चमीरेखे विलेखनीय इत्यर्थः एतद्बीजस्यैव चतुर्वर्णरूपचतुरवयवत्वाच्चतुरंशमानेन एका षष्ठीरेखा विलेखनीया । ह्रीं वीजस्थत्रिवर्णात्मकस्थूलवीजस्य त्र्यवयवत्वात् त्र्यंशमानेन एका सप्तमी वृत्तस्पर्शिरेखा विलेखनीया । एवं कृतनवरेखासूपरिष्टादधस्ताच्च परिगणने तृतीयरेखयोर्वृत्तस्पर्शित्वाद्दीर्घमानांशमार्जनं तन्मानांशह्रानं वा न कार्यम् । अन्यसप्तरेखानां दीर्घमानांशमार्जनं तन्मानांशह्रानं वा कर्तुं तत्तदंशान् दर्शयति—हेति—ऊर्ध्वाधस्ताच्च प्रथमरेखा तद्रेखोभयपार्श्वेपि ह—त्याज्यं ला—त्र्यंशमित्यर्थः । लेत्यूर्ध्वस्थद्वितीयरेखाव्युत्क्रमात्तस्य द्वितीयत्वात्तद्रेखायां ह्रीमिति पञ्चात्मकत्वादंशपञ्चकं ह—त्याज्यमित्यर्थः । लेत्यधस्ताच्च द्वितीया रेखा तत्र

ह्रीमिति चतुर्थवर्णात्मकत्वात् ह्—अंशचतुष्टयं त्याज्यमित्यर्थः । ह्रेति—तस्यात्र चतुर्थवर्णरूपत्वादूर्ध्वादधस्ताच्च चतुर्थारेखा । तद्रेखाद्वयेपि हसकेति—षोडशांशंकटपयाद्यङ्कमानेन हत्याज्यमित्यर्थः । ह्रीमिति पञ्चाक्षरत्वात् पञ्चमीरेखा तदुभयपार्श्वेऽपि ह्—त्याज्यं सकह्लेति एकोनविंशत्यंशमित्यर्थः ।

एवं कृते चक्रे नवरेखायोजनं यथा द्वितीयखण्डे—हसकह्लेति पञ्च ह्रीमिति चत्वारि – एवं नवाक्षररूपाः नवरेखाः । तत्र हकारादिरूपपञ्चरेखाश्शक्तिपञ्चकोणोत्पादकाः । ह्रींकारचतुर्वर्णरूपचतस्रो रेखाश्शिवकोणचतुष्टयोत्पादकाः । एतयोरूर्ध्वादधस्ताच्च शिवशक्त्यैकीकरणात्त्र्यश्चत्वारिंशत्कोणरूपशिवशक्तिविलासमयं चक्रं भवति । अत्रेदमप्यवधेयं ह्—स—क—ह्—इति चत्वारो वर्णा ऊर्ध्वस्थ चतस्रो रेखा भवन्ति । ते चतुर्वर्णा एव प्रातिलोम्येन ह्—क—स—हेति अधस्ताच्चतस्रो रेखा भवन्ति । लकारः पञ्चमो वर्णः मध्यस्था पञ्चमी रेखा एतन्यायेनात्र योजनमिति ।

ऊर्ध्वस्था प्रथमा रेखा अधस्थ चतुर्थरेखयां योज्या ।
तथा—अधस्थ प्रथमारेखा ऊर्ध्वस्थ तृतीयरेखायां च योज्या ।
ऊर्ध्वस्थ द्वितीयारेखा अधस्थप्रथमरेखायां योज्या ।
तथा—अधस्थ द्वितीयारेखा ऊर्ध्वस्थप्रथमरेखायाञ्च योज्या ।
ऊर्ध्वस्थ तृतीयारेखा अधस्तनप्रथमरेखोपरि वृत्ते योज्या ।
तथा—अधस्थ तृतीया ऊर्ध्वस्थ प्रथमरेखोपरि वृत्ते च योज्या ।

ऊर्ध्वस्था चतुर्थी रेखा अधस्तात् द्वितीयरेखायां योज्या।

तथा-अधस्स्थिता चतुर्थीरेखाऊर्ध्वस्थ द्वितीयरेखायाञ्च योज्या।

मध्यस्था पञ्चमीरेखा तु अधस्थतृतीयरेखायां योज्या। एवं रेखायोजनक्रमः।

एतल्लेखनक्रमोपबृंहणप्रमाणानि—

" षण्णवत्यंगुलायामं सूत्रं प्राक्प्रत्यगायतम्।
चतुर्भिरंगुलैश्शिष्टैस्संवृतानि च भूपुरम्॥
अन्तर्नवांगुलं ज्ञेयं मध्येपत्रन्तु षोडशम्।
एकादशांगुलं ज्ञेयमष्टपत्रं समालिखेदि"ति॥

षण्णवत्यंगुलायामविवरणम्।

"देवी स्तुता मे गंगावल्लीस्तु ते"ति:" व्यासे देवी कृते तत्तमगलविगते तु" इति च रेखांशकरणमानम्।

" आद्ये द्वितीयेष्टमके नवमे च यथाक्रमम्।
मार्जयेत् गुणभागांशान् वृत्तादेकत्रचान्यतः॥
चतुर्थषष्ट्योः पार्श्वे तोयांशं परमार्जयेत्।
पञ्चमस्य धियांशन्तु मार्जयेच्च द्विपार्श्वत "॥

इति रेखादीर्घांशहानं रेखापार्श्वद्वयमार्जनम्।

" तृतीयान्ता द्वितीयान्ताच्चतुर्थान्ताच्च पञ्चमात्।
प्रथमान्तात्सूत्रयुगं वृत्ततो नवमादिकम्॥

हर्म्यपर्वसमोपेतं भद्रसन्धिसमन्वितम् ।
यच्चक्रं ललितायास्तन्मङ्गलम् नेतरत् भवेत् " ॥

इति काश्मीरसम्प्रदायेनोक्तम् ।

अत्राष्टदलषोडशदलाद्यन्तवलयत्रितयव्यतिरिक्तं वलयत्रितयमुक्तं प्राचीनमतम् ।

" एका सासीत् प्रथमा सानवासीदासोन विंशदासोन त्रिंशचत्वारिंशदथ तिस्रस्समिद्धा उशतीरिव मातरो माविशन्तु—ऊर्ध्वज्वलज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोभूदानन्दनं मोदनं ज्योतिरिन्दो रेता उवै मण्डला मण्डयन्ति—तिस्रश्च रेखास्सदनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशा एतत्पुरं पूरकं पूरकाणामत्र प्रथेते मदनोमदन्ये" ति त्रिपुरोपनिषच्छ्रुतिसम्मतं दशखण्डीव्याख्यानोपबृंहितं श्रीकल्पसूत्रकाराणां भार्गवश्रीपरशुरामर्षिवर्याचार्याणां च पृथग्वलयत्रितयविवर्जितचक्रलेखनमतमेवानुकृतम् ।

एवं तृतीयखण्डेन द्वितीयखण्डेन च ह्रीमिति श्रीचक्ररूपं दर्शितम् । एवं श्रीचक्रं विलिख्य मध्यत्रिकोणमध्ये विन्दुर्विलेख्यः । एवं कृते सति ।

" विन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयञ्च धरणी सदनत्रयञ्च
श्रीचक्रराजमुदितं परदेवतायाः " ॥

इति सेतुबन्धघृतयामलोक्तश्रीचक्रं भवति । अस्मिन् श्रीचक्रबिन्दुमध्ये श्रीपरदेवतामावाह्य सम्पूजयेदित्यर्थः ।

## ॥ अथ पूजोपचारान् दर्शयाति ॥

तृतीयखण्डे सकलेति–कलाभिश्चतुः षष्टिभिस्सहितास्सकला-श्चतुः षष्ट्युपचारा इत्यर्थः । तेषामुपचारद्रव्याणां ह्रीं–अव्ययं सङ्को-चराहित्येन समृध्येत्यर्थः । तत्राशक्तः कलाभिः षोडशभिस्सहितास्स-कलाः षोडशोपचारास्तेषां ह्रीं–समृध्या पूजयेदित्यर्थः ।

तत्राप्यशक्तस्याह–द्वितीयखण्डे हसकहलानां पञ्चभूतात्म-कत्वात् गन्धपुष्पधूपदीपनैवेद्यात्मकानां पञ्चोपचाराणां ह्रीं–समृध्या ईल ह्रीमिति सम्बद्ध्यते । ह्रीं श्रीपरदेवतां राजराजेश्वरीं ईल ईड संपूजयेदित्यर्थः ।

अथात्र नवविधोपचारविशेषान् दर्शयति–अत्र पञ्चोपचाराः हसकहलेति पञ्चवर्णैर्लक्ष्यन्ते ।

एतैस्सह ह्रींकारस्य चतुर्वर्णात्मकत्वाच्चतुर्भिर्नववर्णैर्नवोपचाराः लक्ष्यन्ते ।

ह्रींकारस्य द्वादशवर्णात्मकत्वाद्द्वादशोपचाराः लक्ष्यन्ते ।

ह्रींकारस्य वर्णेषु ह–ब्रह्मवाचित्वादेकत्वं र–अग्निवाचित्वात् त्रित्वं ई–तस्य त्र्यवयवरूपत्वात् त्रित्वं बिन्द्वादीनां नवकमाहत्य षोडशसङ्ख्याभिः षोडशोपचाराः लक्ष्यन्ते ।

ह—अष्ट—स—सप्त—क एकं—ह—अष्ट—आहत्य चतुर्विंशतिः। एवं चतुर्विंशतिसङ्ख्याकैः लैः—उपचारैः । लकारस्य—

"लो वाते लवणे च स्याल्लोदाने च प्रकीर्तितः ।
लः श्लेषे चाशये चैव प्रलये साधनेपि लः ॥"

इत्येकाक्षरकोशात्साधनदानवाचित्वेन द्रव्यसमर्पणार्थकत्वादुपचार इत्यर्थः । तथा च चतुर्विंशत्युपचारा लक्ष्यन्ते । ह—अष्ट स—सप्त क—एकं ह—अष्ट लळयोरभेदात्—ळ—नव ह्रीति त्रीणि आहत्य षट्त्रिंशदुपचारैर्मीयते पूज्यत इति ह्रीं—

हसकहळेति त्रयस्त्रिंशत् । ह्रीमित्यत्र हकारस्य प्रथमत्वादेकं—रवर्णस्य द्वितीयत्वाद्द्वयं—ईकारस्य तृतीयत्वात् त्रयं—बिन्द्वादिनवकञ्चेति पञ्चदश आहत्याष्टचत्वारिंशदुपचारा लक्ष्यन्ते ।

हकारस्य सूर्यवाचित्वात् द्वादश "सः कोपे वरणे सस्स्यात्तथा शूलिनि कीर्तित" इत्येकाक्षरकोशात्सकारस्यैकादशसङ्ख्या । ककारस्याग्निवाचित्वात् त्रीणि हकारस्य पूर्ववद्द्वादश लकारस्येन्द्रवाचित्वाच्चतुर्दश तथा द्विपञ्चाशत् ह्रीमिति द्वादश । आहत्य चतुःषष्ट्युपचाराः लक्ष्यन्ते ।

हकारस्य द्वादश सकारस्यैकादश ककारस्य वसुवाचित्वादष्टौ हकारस्य पूर्ववद्द्वादश लकारस्य चतुर्दश तथा च सप्तोत्तरपञ्चाशत् ह्रींकारस्याष्टचत्वारिंशदुपचारे पञ्चदशसङ्ख्यावत् पञ्चदशसङ्ख्या गृह्यते । आहत्य द्व्यधिकसप्ततिसङ्ख्याभिर्द्विसप्तत्युपचाराः लक्ष्यन्ते ।

द्विसप्तत्युपचारस्तु ललितासहस्रनामभाष्ये भास्कराचार्यैरुपपादितत्वात् ।

एवं पञ्चोपचारादिभिर्यथाविभवं यथाशक्ति भक्त्या ह्रीं श्रीपरदेवता समर्हणीयेत्यर्थः ।

उक्तोपचारेषु प्रसिद्धत्वात् षोडशोपचारान् विशदयति—प्रथमखण्डे के चित्ते—ध्यात्वेत्यर्थः । ए सप्तमी श्रीचक्रविन्दौ ह्रीमव्ययं पुष्पैः "ह्रींकारसुमनोमाध्वी" ति त्रिशत्यां ह्रींकारस्य पुष्परूपोपपादनात् । आवृत्या ह्रीं—श्रीपरदेवतां ईल—आवाहयेत्यर्थः । आवाहने मन्त्रस्तु मूलमेव । उपचाराणान्तु भुवनेश्वरीवीजं शक्तिखण्डं वा यथोपदेशपारम्पर्यं ग्राह्यम् ।

अथासनं—ह्रीमिति पीठं ईल समर्पयेत्यर्थः । "ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका" इति ह्रींकारस्य पीठरूपोपपादनात् । ए—जलं पादयोः पाद्यं ईल समर्पय एकारस्य जलवाचित्वात् । अकारसप्तमीरूपस्य पादवाचित्वाच्च । के—मुखे ए—जलं—आचमनीयमीलार्पय । किञ्च के करे ककारस्य करवीजत्वात् । ए—जलं गन्धपुष्पाक्षतादियुक्तमर्घ्यमित्यर्थः । ईल समर्पय के देवताशिरसि ए क्षीरमधुकेरादिगन्धजलं स्नानार्थमील समर्पयेत्यर्थः । तत्र तत्राचमनं यथोचितं देयमिति ग्राह्यम् । अथ वस्त्राभरणानि—ईड ह्रीं ईडानि ह्रीं चेति समासः—ईडानि अन्तरीयोत्तरीयकञ्चुकानि । दिव्यारुणपट्टवस्त्राणि ह्रीमव्ययं केशादिपादान्तसर्वावयवसमुचितदिव्यरत्नभूषणानि च ईल समर्पयेत्युपचारद्वयं दर्शितम् ईड पदस्य दिव्यपट्टवस्त्र-

निरूपणं ध्यानप्रकरणे निरूपितम् । ह्रींकारस्य "ह्रीं मती ह्रीं विभूषणे" ति भूषणरूपोपपादनात् । अथ द्वितीयखण्डे—हसकहलेति लवर्णेन कुङ्कुमकर्पूरकस्तूर्यादिगन्धानित्यर्थः । हवर्णेन जातीचम्पकाशोकविल्वतुलसीमल्लिकादिपरिमलपुष्पाणि माल्यानि चेत्यर्थः । सवर्णेन तस्य वायुवाचित्वाद्दशांगोपेतधूपमित्यर्थः । कवर्णेन तस्याग्निवाचित्वात् गोघृताक्तत्रिवर्तिसमेतदिव्यदीपं रत्नदीपस्तम्भदीपमालादीपादीनि च । हवर्णेन "हश्शिवे सलिले शून्ये धारणे मंगलेपि चे" ति मेदिनीकोशात् हवर्णस्यान्नवाचित्वस्योक्तत्वाज्जलवाचित्वान्मङ्गलवाचित्वाच्च । हकारे सूक्ष्मरूपेणाकारस्य सत्वादकारादिहकारान्तानां प्रत्याहारन्यायेन सर्ववर्णरूपत्वात्सर्ववर्णानां सहस्रदलकमले निषेवितत्वाच्च तन्निष्यन्द्यमृतीकृतं दिव्यनैवेद्यं शाल्यन्नव्यञ्जनसूपपायसपनसाम्रकदलीमातुलुंग द्राक्षादिफलमधुशर्करापृथुकलाजेक्षुरसवालकेरांबुक्षीरादिरूपञ्च इल समर्पय । एतत्गन्धादिपञ्चोपचाराणां ह्रीमव्ययं समृध्याप्रथमखण्डे—के—ए—सप्तमी एतद्वर्णद्वयस्य शिरोमुखकरललाटपादादिवाचित्वात् गन्धं ललाटे देहे च पुष्पाणि माल्यानि च शिरसि कण्ठे पादे च धूपं पादसमीपे दीपं मुखसमीपे नैवेद्यं मुखे च इल समर्पयेत्यर्थः ।

अथ ताम्बूलं – प्रथमखण्डे – के—देवीवक्त्रे ए—एला नामैकदेशात्—ई—लवंगम् अत्र प्रश्लिष्टस्य इकारस्य निशाकरकरवाचित्वात् कर्पूरमित्यर्थः । "लवंगं देवकुसुमं श्रीसंज्ञ" मिति कोशात् । ईकारस्य श्रीवाचित्वात् "घनसारश्चन्द्रसंज्ञ" इति कोशादिकारस्य

चन्द्रकरवाचित्वादित्यर्थः । ल–ताम्बूलं नागवल्लीक्रमुकवाच्यं–लवर्णस्य "श्रीश्च लक्ष्मीश्च ला–सा–मे"ति त्रिकाण्डशेषकोशात् श्रीवाचित्वेन ताम्बूलस्य श्रीदेवताकत्वात् । तेषां ह्रीं–ह्र–हरणान्मिश्रणात् ई–एकाकारप्रापणं अमति तनोतीति म् ताम्बूलवीटिकामित्यर्थः । ईल समर्पय । अथ नीराजनं–तृतीयखण्डे सेति सकारस्य चन्द्रवाचित्त्वेन "घनसारश्चन्द्रसंज्ञ" इति कोशात् कर्पूरमित्यर्थः । कल कलनं ज्वलनं तस्य ह्रीं समृद्धिं कर्पूरनीराजनं इल – समर्पय । अथ नमस्कारः द्वितीयखण्डे – कहलेति कस्य शिरसः हलेन कर्षणेन भूमौ प्रापणेन नमस्कारेणेत्यर्थः । टा लोपः छान्दसः ह्रीं श्रीमहात्रिपुरसुन्दरीं हस–एवं षोडशोपचारैस्सम्पूज्य प्रसादय । आवृत्या हसकहलह्रीमिति छेदः लह्रीं श्रीचक्रस्थपरदेवतां हस मनसा ध्यायस्वेत्यर्थः । किञ्च लह्रीं चन्द्रविद्यां श्रीविद्यां कह जपेत्यर्थः । "कह कह वम वमे"ति महामन्त्रेषु दर्शनात् ।

ईड परदेवतां महोपनिषदादिदिव्यस्तोत्रैः स्तुहीत्यर्थः । एवं श्रीचक्रनायिकापूजनविधानं प्रदर्शितम् ।

अथातोऽस्याः श्रीविद्यायाः निगूढतरानर्थविशेषानुपदिशति ।

प्रथमखण्डे केति – कायत इति क "कैशब्द" इति धातोः क्विप् । शब्दात्समस्तवेदा इत्यर्थः । ईयत इति ए–"इक् स्मरण" इति धातोर्गुणः । समस्तशास्त्राणि वेदांगमीमांसादिसूत्रागमस्मृतिपुराणेतिहासाः । एतेषां ई प्रतिभानं "ईदीप्ता" विति धातोर्निष्पन्नत्वान्न-

गुणः । ल वादिमतखण्डनं "लूञ् छेदन" इति धातोर्निष्पन्नं—ह्रीं तत्र ह्री बुद्धिचातुरी ह्रीशब्दस्य सत्वप्रधानमायाबीजांशतया सूक्ष्म-बुद्धिवाचित्वात् । एतदुभयमपि माति निर्मातीति ह्रीं—"माङ्मान" इति धातोः क्विप् । "मितेरपीतेर्वा मिनोती"ति श्रुतेर्लुप्ताकारत्वेन ग्रहणम् । तथा च सर्ववेदोपवेदवेदांगपूर्वोत्तरमीमांसासांख्यपातञ्जल-शाण्डिल्यनारदीयसूत्रनिचयन्यायधर्मशास्त्रतन्त्रपुराणेतिहासप्रतिभान - तद्विषयकवादिमतखण्डन बुद्धिचातुरीनिर्मात्री श्रीपरदेवतेत्यर्थः ।

अथ हसेति—हं "हशिवे सलिले शून्ये धारणे मङ्गलेपि च । गगने च कुलीशे च रक्ते नाके च वर्ण्यत" इति मेदिनीकोशात् "हं क्लीवमस्त्रमुखयोः क्वणिते मणिरोचिषी"ति रत्नमालाभिधानाच्च । बहुरत्नानि मङ्गलद्रव्याणि च उपलक्षणेन सुवर्णरजतादीनि चेत्यर्थः । सं "सं क्लीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इति कोशादत्र सकारस्य निवारणवाचित्वादाध्यात्मिकाधिभौतिकाधिदैविकादिसर्व-दुःखरोगबाधोपद्रवनिवारणमित्युच्यते । कं सुखं "कं शिरोम्बुसुखे क्लीव" मिति कोशात् कवर्णस्य सुखवाचित्वात् गृहारामक्षेत्र पुत्रमित्र-कलत्र धेनुधनधान्यदासीदासवासोवाहनालङ्कारस्रक्चन्दनभक्ष्यभोजन-पानफलताम्बूलचर्वणादिसुखोपकरणानीत्युच्यन्ते ह—हा च हश्च तयोस्समाहारः एकशेषसमासात् हं "हात्यागे गतिवणियोति कोशात् हाकारस्य त्यागवाचित्वादनेकदानधर्मानित्यर्थः । हं पदस्योदाहृतको-शात् कणनवाचित्वाच्छब्दः । महाविद्वान् धनाढ्यो भोगी धर्मनिरतो-दारशीलपरमभागवत इत्यादिना श्लाघ्यतया कीर्त्यमानत्वाद्यश इत्यर्थः ।

अनेकगुणाकरत्वादखण्डकीर्तिरिति यावत् । एतादृशधर्मान् कीर्तिश्चैतेपूक्तेषु लाः खण्डनानि यावत्प्रतिबन्धकानि ह्रीं—ह्र—तेषां हरणं सर्वप्रतिबन्धकनिर्हरणपूर्वकमित्यर्थः । ई प्रापयित्रीत्यर्थः । तथाचानेकरत्नस्वर्णादि आध्यात्मिकादि दुःखनिवराणगृहारामक्षेत्राद्यनेकदानधर्माखण्डकीर्तीनां तत्प्रतिबन्धक निर्हरणपूर्वकप्रापणकर्त्रीत्यर्थः ।

तृतीयखण्डे सकलेति कलाभिरंशैस्सहितास्सकलास्तेषामखिलद्वैतप्रपञ्चानां ह्र—हरणेनापोहनेन ई "ई दीप्ता" विति धातोस्स्वप्रकाशमानचिद्रूपं निजानन्दं ब्रह्मेत्यर्थः । म्—अमति प्रापयति "अम् गता" वितिधातोस्स्वभक्तस्य तत्वज्ञानोद्बोधनेनाखिलद्वैतातीतं निजानन्दं ब्रह्म प्रापयित्रीत्यर्थः । एवञ्चोपासकस्य सर्वविद्यां सर्वधर्मसम्पत्समृद्धिमन्ते मुक्तिञ्च दिशति श्रीमहात्रिपुरसुन्दरीत्यर्थः ।

॥ एवं चतुर्वर्गार्थः प्रदर्शितः ॥

अथार्थान्तरं दर्शयति प्रथमखण्डे ए – अश्व ईच ए – अः कामेश्वरः तस्मिन् ई – कामेश्वरी अकारे ईकारयोजनात् ए हे कामेश्वराङ्कवासिनि परदेवते त्वं के – प्रत्यगात्मनि विषये – ह्रीं – मयि विद्यमानां मायामावरणशक्तिं ईल – ईर – निवारयेत्यर्थः । ईर गतौ शब्देचे" ति धातोः लोण्मध्यमः कपिरकादित्वाल्लत्वं – तथा च – प्रत्यग्रूपत्वंपदलक्ष्यार्थस्फूर्तिं कुर्वित्यर्थः—

द्वितीयखण्डे कहल ह्रीमिति—कस्य परब्रह्मणः हल—"हल ग्रहण" इति धातोः हलां ब्रह्मग्राहिकां ह्रीं—शुद्धबुद्धिवृत्तिं तुरीयाका-

दाकारितान्तःकरणवृत्तिमित्यर्थः हस—विकासय "ह से हसन इति धातोर्लोण्मध्यमः त्वंपदलक्ष्यार्थस्फूर्त्यैव तत्पदलक्ष्यार्थाखण्डचिन्मात्र-स्फूर्तिं प्रकाशयेत्यर्थः—

तृतीयखण्डे सकल ह्रीं – आत्मानात्मरूपसर्वद्वैतप्रपञ्चबुद्धिं यथार्थात्ममात्रज्ञानेन ईल – निवारय चिद्रूपाया भवत्या मम च प्रपञ्चस्य चाभेदेन चिन्मात्रे ब्रह्मण्यध्यस्तत्वात् "ब्रह्मैव सन् ब्रह्माप्येती" ति श्रुतेः विस्मृतकण्ठगतचामीकरन्यायेन – शुद्धचिदानन्दसत्तामात्रं भवत्विति भावः।

## एवं स्वात्मानुभवार्थो दर्शितः।

अथ प्रथमखण्डे के – सवितरि देवे सप्तम्यर्थः निष्ठत्वं तत्र-द्योतमानमित्यर्थः – ए – शुद्धशिवशक्त्यात्मकं तेजः सवितृदेवस्या-त्मत्वेन वरेण्यं भर्गपदवाच्यं तत् परंज्योतिरित्यर्थः तद्रूपेण ध्याय-माना ह्रीं – महात्रिपुरसुन्दरी त्वं आवृत्या ह्रीं – अस्मद्बुद्धिवृत्तिं ईल-परमार्थे परंज्योतिषि प्रवर्तयेत्यर्थः।

अथ तुरीयपादार्थमाह – द्वितीयखण्डे हसकं – रजस्तमो-गुणातीतं निर्मलं प्रसन्नं हलेति–हेन–हवर्णस्य शब्दवाचित्वात् शब्देन लं "ला आदान" इति धातोर्निष्पन्नं आदानं शब्देनाऽदातुं योग्य-मित्यर्थः। ह्रीं सवदमोमित्यर्थः तथैव हसकं सर्वगुणातीतं हस्य शब्दस्य लं – छेदनं यत्र तत् हलं शब्दास्पर्शि ह्रीं – अवदमोमि-त्यर्थः। तथा च परोरजसे हसकं हल ह्रीं – सावदमोमित्यर्थः।

ह्रींकारस्य ओङ्कारस्य चाभेदात् "विद्यों ह्रीं मों ह्रीं मित्युपनिषदि" ति श्रुतेः – प्रणवश्च ह्रीङ्कारश्चैकं तदर्थवस्त्वप्येकमित्यर्थः – तृतीयखण्डे सकलं वाच्यवाचकरूपं एतत्सर्वमपि ह्रीं – परंब्रह्मैवेत्यर्थः ।

एवं गायत्री सर्वस्वार्थो दर्शितः ।

अथ प्रथमखण्डे क – हे श्रीकामेश्वर ह्रीं – हे श्रीमहादेवि-जगज्जननि ए – सप्तमी अकारवाच्ये त्वत्पादकमले अकारस्य पादवाचित्वं उदाहृतकोशात्सिद्धम् – ईल – ईर – भवद्भत्सं मां भवत्समीपं प्रापयेत्यर्थः । स्वयमेवाप्नुहि श्रद्धा भक्तिध्यानयोगादिति चेत् अशक्तत्वात् प्रार्थयति द्वितीयखण्डे हे क – परमेश्वरमन्नाथ ह्रीं–मन्मातः परदेवते हस–प्रसीद अपारकृपानिधित्वात् हल–भवत्समीपं मां आकर्षय ।

जडं त्वामाकृष्टुमशक्ताविति चेत् पुनः प्रार्थ्यते तृतीयखण्डे सकल ह्रीं–सर्वशक्ते कर्तुमकर्तुमन्यथाकर्तुमपि शक्तिमत्वात्—

एवं प्रपत्तिरूपो भक्त्यतिशयार्थो दर्शितः ।

अथ प्रथमखण्डे ए श्रीविद्येश्वरी त्वं के सर्ववेदशास्त्रजाते ह्रीं अत्र हकाररेफेकाररूपान् ह्रीन् आकाशादिभूतजन्यान् अग्रतोर्थान् सर्वपदार्थानित्यर्थः । अस्य भुवनबीजाङ्गत्वात्—

"हरिशिवे सलिले शून्ये धारणे मङ्गलेऽपि च – गगने नकुलीशे चे" ति मेदिनी कोशात् रः–पुमान् पावके काम" इति - रं क्लीबे रुधिरे मूर्ध्निध्यानव्योमाण्डकुक्षिष्वि "ति "इकारः फण-

रत्नार्चिष्वग्रतोर्थगुहार्थयो" रिति रत्नमालाभिधानाच्च म्—माति इद-मित्थमिति जानात्यनयेति ह्रीं बुद्धिं अस्मद्बुद्धिमित्यर्थः। ईल—ईर प्रवर्तय सर्ववेदशास्त्रज्ञं मां कुर्वित्यर्थः।

द्वितीयखण्डे कस्य सर्वशास्त्रस्य हला च ह्रीं च हलह्रीं—कर्ष-णबुद्धिं शास्त्रतव्याख्यानकरणबुद्धिचातुरीमित्यर्थः। हस—विकासय।

तृतीयखण्डे सकलानां सर्वेषां ह्रीं यथार्थस्वभावसंविर्त्ति हस—प्रकाशय सर्वथा सर्वज्ञं मां कुर्वित्यर्थः।

एवं प्रज्ञासिद्ध्यर्थो दर्शितः।

अथ प्रथमखण्डे ए—शिवकामेश्वरि के ऐहिकसुखे ह्रीं-मद्बुद्धिं अमुकबुद्धिं वा ईल प्रवर्तय।

द्वितीयखण्डे कस्य उक्तसुखस्य हलानां ग्राहकाणां उत्पाद-कानां साधनानां गृहारामक्षेत्रधनधान्यकलत्रपुत्रादिसम्पदामित्यर्थः। ह्रीं—समृद्धिं ईलेत्यनुषज्यते ईल—प्रापय—हस—प्रकाशय—उपर्युपरि वर्धयेत्यर्थः अप्राप्तस्य प्राप्तिः योगः प्राप्तस्याक्षतिः क्षेमः एवं रूप-योगक्षेमं कुरुष्वेति भावः।

तृतीयखण्डे सकल ह्रीं—कलाशब्दस्य "अंशमात्रे मूलवृद्धौ सुषमाविद्ययोः कला तत्तदागमसिद्धासु गुरुणि स्त्रीरजस्यपी"ति कोशात् सुषमादिवाचित्वात् विद्याकान्तिदीर्घायुष्यसहितं सकलं ह्रीं ह्रीयतेऽनेन देह इति ह्र—रोगः तस्य ई गतिः विनाशः तां मातीति ह्रीं—आरोग्यमित्यर्थः। ईल प्रापय हस उक्तं सर्वं अभिवर्धयेत्यर्थः।

## ॥ एवं ऐहिकार्थो दर्शितः ॥

अथ प्रथमखण्डे कः ब्रह्मा ए सरस्वती एकारस्य वाग्बीजाङ्गत्वात् ह्रीं तदुभयरूपां श्रीविद्यादेवतां ईल ईड मन्त्रस्तोत्रैरित्यर्थः ।

द्वितीयखण्डे क हे वत्स साधकेति सम्बुद्धिः ह महाविष्णुः ल लक्ष्मी श्रीभगवती "श्रीश्च लक्ष्मीश्च लासामे" ति त्रिकाण्डशेषाभिधानात् ह्रीं तदुभयरूपां श्रीराजराजेश्वरीं हस प्रसादय तृतीयखण्डे कलया महाकलया गौरीदेव्यासहितं सकलं साम्बमूर्तिमित्यर्थः शिवकामीसमेतनटराजेश्वरं अर्धनारीश्वरं चेत्यर्थः । ह्रीं तादृशोभयरूपां श्रीमहात्रिपुरसुन्दरीं ईड श्रीविद्यासहस्रनामादिभिः स्तुहि हस पूजाध्यानयोगादिभिः प्रसादयेत्यर्थः । ईल हसेति पुनरनुषज्यते ईर स्वाभीष्टमाप्नुहि तेन हस स्वयं मोदस्वेति चार्थः एवं पञ्चशक्ति पञ्चमूर्त्यर्थो दर्शितः ।

अथ प्रथमखण्डे ए भूताकाशे ङिलोपश्छान्दसः तद्व्याप्य सर्वपदार्थेऽपीत्यर्थः "एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ व्योम्न्येकादशसङ्ख्यायामि"ति रत्नमालाभिधानात् के—चित्ते चित्ताकाशेऽपीत्यर्थः "कोब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिष्वि"ति उक्तकोशात् ह्रीं ह स्थूलं र सूक्ष्मं इ कारणं इकारोऽत्र प्रश्लिष्टः ईं उक्तसर्वस्थूलसूक्ष्मकारणशरीरेषु सर्वान्तर्यामित्वेन प्रकाशमानां शुद्धचिदाकाशरूपां परब्रह्मस्वरूपामित्यर्थः ।

"चित्ताकाशं चिदाकाशं भूताकाशमिति त्रिधे" ति वासिष्ठस्मरणात्—

द्वितीयखण्डे हसेतिवर्णद्वयरूपेण कस्य प्राणवायोः हलेन ऊर्ध्वाधःकर्षणेन हंसेति अजपात्ममन्त्ररूपेण ह्रीं तन्मन्त्रार्थजीवात्मपरमात्मैकरूपेण च प्रकाशमानां हकारस्य जीवात्मवाचित्वात् रवर्णस्य आग्नेयबीजत्वेन परमात्मवाचित्वात् "रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि" चेत्येकाक्षरकोशाच्च ई दीप्ताविति धातोश्च सिद्ध्यति ।

तृतीयखण्डे सकलां दिव्यमङ्गलविग्रहरूपां ह्रीं एवं सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलरूपां सर्वसृष्टिस्थितिसंहारकारिणीं श्रीमहात्रिपुरसुन्दरीं देवीं ईल–ईर अवगच्छ द्विरावृत्त्या ईर अवाप्नुहि ईल–ईड पूजामन्त्रस्तोत्रादिभिस्स्तुहीति चार्थः ।

॥ एवं सकळनिष्कलरूपार्थः ॥

अथ प्रथमखण्डे कः ब्रह्मा ए विष्णुः अत्र प्रश्लिष्टाकारश्शिवः ई सरस्वती ल लक्ष्मीः ह्रीं गौरी एवं त्रिमूर्तित्रिशक्तिस्वरूपेत्यर्थः द्वितीयखण्डे ह द्वादशादित्याः स चन्द्रग्रहनक्षत्राणि क अष्टवसवः ह एकादशरुद्राः ल आश्विनेयौ देवौ तयोः सम्पृक्तत्वात् "लः श्लेषेचाशयेचैवे" ति एकाक्षरकोशात् ह्रीं एतेषां देवानां शक्तयः तत्तत्पत्नीरूपादेव्य इत्यर्थः वसूरुद्रादित्याश्विनेयानां त्रयस्त्रिंशद्देवतानां एकैककोटिगुणनात् त्रयस्त्रिंशत्कोटिदेवा इति स्मरणात् त्रयस्त्रिंशत्कोटिदेवता तत्तत्पत्नीरूपदेवीमयीयं परदेवतेत्यर्थः । तृतीयखण्डे सकल ह्रीं सर्वयोगिनीशक्तिरूपां चतुष्षष्टियोगिनी देवीमयी चेयं श्रीविद्यापरदेवतेत्यर्थः ।

## ॥ एवं सर्वदेवतारूपोऽर्थः ॥

अथ प्रथमखण्डे—"यदेकादशमाधारं बीजं कोणत्रयात्मकं" इति स्मरणात्—के एकारः मूलाधारस्थं त्रिकोणचक्रं ई तत्रास्थिता कुण्डलिनीशक्तिः ईकारस्य फणिवाचित्वात्—के शिरसि सहस्रदळकमलमध्य इत्यर्थः मूलमाकुञ्च्य प्राणवाय्वाकर्षणात् षट्कमलान्यतिक्रम्य सहस्रदळकमलमागता सती कुण्डलिनीत्यर्थः । ल ह्रीं लात् चन्द्रमण्डलात् सहस्रदलकमलस्थितात् लस्य चन्द्रमण्डलवाचित्वात्—ह्रीमित्यत्र ह्— "हश्शिवे सलिले शून्ये" इति कोशात् हस्य सलिलवाचित्वात् सलिलं अमृतरसः । तस्य रं विसर्गः "रं क्लीबे रुधिरे मूर्धनि ध्यानव्योमाण्डकुक्षिषु । वक्त्रे भये च त्रिषु तु विरसे त्यागतीक्ष्णयो" रिति कोशात् रवर्णस्य विसर्जनवाचित्वात् तस्य ई ईकारस्य गत्यर्थकत्वात् द्विसप्ततिसहस्रनाडीप्रापणमित्यर्थः । म् माति कुर्वती देवी कुण्डलिनी शक्तिरित्यर्थः ।

"प्रबुद्धाक्षुत् क्रुद्धादशति शशिनं बैन्दवगतं सुधाधारासारैः स्नपयसि तनुं बैन्दवकले" इति सुभगोदयस्मरणात् ।

आधारचक्रसंविष्टा शक्तिः कुण्डलिनी अभ्यासादेतन्मार्गेण सहस्रदलकमलमागत्य विराजत इत्युपदिशति द्वितीयखण्डे व्युत्क्रमेण लं मूलाधारस्थितं महीतत्त्वं हं मणिपूरचक्रस्थं जलतत्त्वं हवर्णस्य जलवाचित्वात् कं स्वाधिष्ठानगतमग्नितत्त्वं सं अनाहतचक्रस्थं वायुतत्त्वं हं विशुद्धिचक्रस्थं आकाशतत्त्वं ह्रीमिति तत्र ह आज्ञाचक्रस्थं मनस्तत्त्वं

ह्वर्णस्य हमित्यभिमानवाचित्वात् एतेषां ग्रन्थित्रितययुक्तमूलाधारादिषट्चक्रकमलनिष्ठानां पृथिव्यादितत्त्वानां षण्णां रात् त्यागात् अतिक्रमणात् ईं तत्र ई इ ईं इति छेदः ई सहस्रदळेइना परमशिवेन सह ईं कुण्डलनी शक्तिरूपा परमानन्दसंवित् श्रीत्रिपुरसुन्दरीविलसतीत्यर्थः ।

अथ तृतीयखण्डे सकळे सहस्रदळकमलमध्यस्थितक्षयवृद्धिरहित श्रीचक्रात्मक सादारव्यकलामयचन्द्रमण्डले ह्रीं तत्र हः सूर्यः रः अग्निः इ इन्दुः ई तटिल्लेखा एतन्मयीं ईं प्रत्यगभिन्नपरब्रह्मानन्दमयीं देवीमित्यर्थः आवृत्या सकल ह्रीं संज्ञानं अस्यास्तीति सः ज्ञानी "अर्शाद्यच्" उक्तपरदेवतां साक्षात्कुर्वन् पुनश्च सः महान् योगी कस्य आनन्दस्य कवर्णस्य सुखवाचित्वात् । लहरीति विरलवर्णतया ग्रहणात् आनन्दलहरी तां म् माति प्राप्नोतीत्यर्थः ।

एवं तन्त्रेपूपबृंहितं सौन्दर्यलहर्यां श्रीशङ्करभगवत्पादाचार्यैरपि प्रपञ्चितं वेदितव्यम्—

॥ एवमागमहृदयार्थो दर्शितः ॥

अथ प्रथमखण्डे—ह्रीं श्रीपरदेवतैव के शिरसि सहस्रार इत्यर्थः ए परमगुरुः परब्रह्मरूपः ।

द्वितीयखण्डे—हः आज्ञाचक्रस्थित ईश्वरः सः विशुद्धिचक्रस्थितो जीवः सकारस्य प्राणवायुवाचित्वात् जीव इति गृह्यते आधारक्रमानुरोधाच्च कः अनाहतचक्रस्थो रुद्रः कवर्णस्याग्निवाचित्वेन

"एष वा रुद्रोऽग्नि" रिति श्रुतेः हः मणिपूरचक्रस्थितो विष्णुः "हरुशङ्करे हरौ हंस" इत्यभिधानात् लः—स्वाधिष्ठानचक्रस्थितो ब्रह्मा लवर्णस्य पृथ्वीबीजत्वेन ब्रह्मणस्तदधिष्ठातृदेवतारूपत्वात् —ह्रीं तत्र ह्—मूलाधारचक्रस्थितो गजाननः हकारस्य गजाननवाचित्वं पूर्वमुक्तं एतेषां ई स्वरूपता तां म् माति वहतीति सप्तचक्रस्थित देव स्वरूपिणी श्रीत्रिपुरसुन्दरीत्यर्थः ।

अत्र एकदिने षट्शतोत्तर एकविंशति सहस्रसंख्याक प्राणवायूच्छ्वासनिश्वासात्मक जपाख्य हंसमन्त्राणाम्—

"षट्शतं च गणेशाय त्रिसहस्रं तु ब्रह्मणे ।
विष्णवे त्रिसहस्रं च त्रिसहस्रं पिनाकिने ॥
जीवात्मने सहस्रं स्यादीश्वराय सहस्रकम् ।
सहस्रं गुरवे नित्यं मन्त्रसंख्यां निवेदयेत्" ॥

इति स्मरणात्—उक्तचक्रस्थिततत्तद्देवतानां ध्यानपूजापुरस्सरं तत्तत्संख्यानिवेदनं कुर्यादित्यर्थः ।

तृतीयखण्डे सकलेति—सकलेषु अनुक्तसर्वाधारेषु नवद्वादश षोडश द्वात्रिंशदाधारपद्मेषु च स्थिताः आवृत्या सकलाः—सर्वेदेवताश्च ह्रीं श्रीपरदेवतैवेत्यर्थः । एवं भूतां त्रिपुरसुन्दरीं ईल—ईड—सम्पूज्य स्तुहीत्यर्थः ॥

॥ एवं आधारदेवतास्वरूपार्थों दर्शितः ॥

अथ प्रथमखण्डे — ए अत्र अ श्रीकामेश्वरः तत्रस्था ई श्रीत्रिपुरसुन्दरि हे कामेशोत्सङ्गवासिनि परदेवते ह्रीं श्रीजगन्मातरं त्वां ईल ईड स्तौमि "लडयोरभेदा" "दीडस्तुता"विति धातोः आख्यात लोपश्छान्दसः—के चित्ते मद्धृदयकमल इत्यर्थः आवृत्या ईल—ईर कपिरकादित्वाल्लत्वं "ईर गतौ शब्दे" चेति धातुः एह्येहि मद्धृदयकमले सान्निध्यं कुर्वित्यर्थः ह्रीं हे हृदयकमलवासिनि मन्मातः "हृदयागारवासिनी हृल्लेखे"ति श्रुतेः ए अकारसप्तमीपादे भवद्दिव्यचरणारविन्दे कः—अहं कवर्णस्यात्मवाचित्वात् आवृत्या ईल—ईर गतोऽस्मि शरणं प्रपन्नोऽस्मि इत्यर्थः । द्वितीयखण्डे क—हे श्रीपरमेश्वर ह्रीं श्रीपरमेश्वरि परदेवते हल गृहाण "हल ग्रहण" इति धातोः मत्समर्पितपत्रपुष्पपयः फलादिकं स्वीकुरुष्वेत्यर्थः हस प्रसीद प्रसीदेत्यर्थः आवृत्त्या ह—हे महेश्वर स सर्वेश्वरि लह्रीं चन्द्रविद्यां श्रीविद्यामित्यर्थः कह अव्ययं जपामीत्यर्थः एतत् यथाज्ञात यथाशक्तिजपसमर्पणं आवृत्या हल गृहाण हस प्रसीद प्रसीदेत्यर्थः इति फलमप्रार्थयन्नेव देवीं ईड स्तौति—

अथ तृतीयखण्डे सकल ह्रीं सकलं सर्वमपि प्रपञ्चं ह—हरति ई प्रकाशयति म्—माति निर्मातीति व्युत्क्रमेण सर्वसृष्टिस्थितिसंहारकारिणी श्रीपरदेवतेत्यर्थः किं च सकलानां सर्वेषां ह—हृदि ई दीप्तिं प्रकाशं म् अमति प्राप्नोतीति सर्वहृदयान्तःप्रकाशनी सर्वान्तर्यामिनीसर्वसाक्षिणीत्यर्थः किं च सौति प्रसौति सर्वमिति सः स्रष्टा ब्रह्मा का-

यति व्यवहरति सर्वमिति कः—पालको विष्णुः लीयत इति लः—लयकृत् रुद्रः तान् सकलानपि ह्र—स्वात्मनि हरति ई—प्रकाशयति—म् निर्मातीति ह्रीं विधि हरिहर जननी सर्वजगन्माता सर्वकारणकारणात्मिका सर्वेश्वरी श्रीमहात्रिपुरसुन्दर्येव श्रीमाता श्रीमहाराज्ञीत्यर्थः किं च सकलं स्वकलासमेतं पञ्चब्रह्मात्मकं ह्र—मत्तगजः तस्य इः हरः गजरिपुः सिंहइत्यर्थः ई तदाकारापन्नं पीठं पञ्चप्रेतात्मकपञ्चाननासनं म् अमति प्राप्नोति इति ह्रीं सिंहासनस्था श्रीमत्सिंहासनेश्वरीत्यर्थः सकलेषु सर्वेषु ह स्थूलवाची र—सूक्ष्मवाची इ कारणवाची तथा च तेषु विश्वतैजसप्राज्ञानां विराट् हिरण्यगर्भाव्याकृतानां व्यष्टिसमष्ट्यात्मकसर्वजीवेश्वराणां स्थूलसूक्ष्मकारणशरीरेषु अनेककोटिब्रह्माण्डेषु च स्वमायाकल्पितसर्वप्रपञ्चाधिष्ठातृत्वेन ई—प्रकाशमानं चिद्रूपं म् विन्दुः परंब्रह्म शुद्धचिद्रूपाखण्डानन्दैकरसपरब्रह्मरूपा श्रीपरदेवतेत्यर्थः किं च सकले श्रीचक्रे ह्रीं तन्निष्ठा श्रीमहात्रिपुरसुन्दरी सकल ह्रीं सर्वव्याधिप्रशमनी सकल ह्रीं सर्वाभीष्टप्रदायिनी श्रीपरदेवतेति सदा कीर्तयामि सदा संस्मरामि ईडेति पूर्वेण सम्बन्धः ॥

॥ एवं समर्हणार्थः ॥

अथ प्रयोगार्थविशेषानाह के – चित्ते ए—श्रीराजराजेश्वरीति ह्रीं – श्रीपरदेवतां ध्यायन् सम्पूज्य कृतपुरश्चरणः ईल—ईडेत – सहस्रनामादिभिरित्यर्थः । तृतीयखण्डे सकल ह्रीं चन्द्रकलाविद्यां श्रीविद्यामित्यर्थः । द्वितीयखण्डे कह – प्रकृतिसिद्धोऽयं शब्दः

जपेदित्यर्थः । हेत्यानन्दे – सः पुरुषः लह्रीं – गृहक्षेत्रादिभूसम्पदं आवृत्या ईल – ईर – प्राप्नोतीत्यर्थः ।

अथ द्वितीयखण्डे लह्रीं ले पूर्णचन्द्रमण्डले ह्रीं श्रीललिता-त्रिपुरसुन्दरीं पूर्णिमायां चन्द्रमण्डलमध्यस्थां श्रीपरदेवतामित्यर्थः हस पञ्चोपचारादिपूजया प्रसादयेत्यर्थः तदनन्तरं कह श्रीविद्यां जपेत्यर्थः ।

प्रथमखण्डे ह्रीं – श्रीपरदेवतां क – ए – इत्यादिमाक्षर-नामस्तोत्रेण ललितात्रिशत्या ईल – ईड – स्तुहि आवृत्या ईल ह्रीमित्येकं पदं ई – अत्र ई – इ – इति छेदः ई – श्रीरिति अग्रतः नाम्नियस्यास्सा श्रीपूर्वा लं – भूमण्डलं ह्रीं – अत्र "हृञ् हरण" इति धातोः हरति धारयतीति ह्री हरतेः किन्–चक्रवर्तिनी – ई - माता – श्रीमाता श्रीमहाराज्ञीत्यर्थः – उक्त श्रीमाता श्रीमहाराज्ञीति नामपूर्वक सहस्रनामस्तोत्रैः आवृत्या ईल ईड स्तुहि तस्य फलमुप-दिशति तृतीयखण्डे सकल ह्रीं – सं – प्राणं कलयति विशिष्य कलयति धारयति चिरं जीवतीति सकलः दीर्घायुष्मानित्यर्थः - भावप्रधानोऽयं निर्देशः ह्रीं – ह रत्नं र सुवर्णं इत्यादि ईं श्रियं ऐश्वर्यं तथा च दीर्घायुष्यं सर्वैश्वर्यं च अमति–प्रापयतीत्यर्थः ।

"पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकां
पञ्चोपचारैरभ्यर्च्य पठेन्नामसहस्रकं
सर्वेरोगा प्रणश्यन्ति दीर्घायुष्यं च विन्दति
अयमायुष्करो नाम प्रयोगः कल्पचोदितः

अनेन सदृशं स्तोत्रं न भूतं न भविष्यति
सर्वरोगप्रशमनं सर्वसम्पत्प्रदायकं"

इत्यादि ललितासहस्रनामाध्यायस्मरणात् ।

अथ प्रथमखण्डे ए श्रीकामेशोत्सङ्गवासिनि कामेशवाचिनः अकारस्य कामेश्वरीवाचीकारस्य च युक्तत्वात् हे परदेवतेति केचित्ते ह्रीं श्रीमहात्रिपुरसुन्दरीं ईल ईर अवधारयेत्यर्थः द्वितीयखण्डे हस्रश्रीशिवकामेश्वरि प्रसीद प्रसीद पतिं देहि पतिं देहि पत्नीं देहि पत्नीं देहीति वा प्रार्थयन् लह्रीं चन्द्रविद्यां श्रीविद्यामित्यर्थः कह जप तृतीयखण्डे तस्य फलमुपदिशति सकलं सं प्राणं कलयति रक्षतीति प्राणनाथं पतिमित्यर्थः सकलां प्राणनाथां वा उद्देश्य भेदेनावगन्तव्यमिदं ह्रीं तत्र ह्र तत्प्राप्तिप्रतिबन्धकदुरितकूटं तस्य ई गतिः निवृत्तिः तथा च तादृशदुरितक्षयपूर्वकं—म्—अमति प्रापयति प्रयच्छति श्रीपरदेवतेत्यर्थः ।

अथ प्रथमखण्डे ए हेजगन्मातः ह्रीं श्रीमहात्रिपुरसुन्दरी ललितांबिकात्वमेव कः श्रीकृष्णरूपः ईल ईर श्रीकृष्ण इत्यवगतोऽसि श्रीललिताम्बिकैव श्रीकृष्णरूपेणाविरभूदित्यर्थः "कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा वंशनादविनोदेन करोति विवशं जगत्" इति श्रवणात्—

द्वितीयखण्डे आवृत्या क हे गुरुविप्रपुत्रप्रद सर्वशक्त श्रीकृष्ण हस प्रसीद प्रसीद देहि मे तनयं देहि मे तनयं कृष्णेति प्रार्थयन्

ल्ह्रीं श्रीविद्यां कह जपेत्यर्थः तस्य सिद्धिमुपदिशति तृतीयखण्डे सकलं कलया स्वांशेन सहितं पुत्रमित्यर्थः "आत्मा वै पुत्रनामाऽसीति" श्रुतेः ह्रीं—ह्र—पुत्रप्राप्तिप्रतिबन्धकदुरितवर्गः तस्य ई गतिः प्रशमनं तत्पूर्वकं—म्—अमति प्रापयतीति पुत्रं तत्प्राप्तिप्रतिबन्धकदुरितनिर्हरणपूर्वकं सम्प्रयच्छतीत्यर्थः ।

अथ तृतीयखण्डे सकल ह्रीं कलाभिश्चतुष्षष्टिकलाविद्याभिस्सहिता सकला सा च ह्रीं चेति समासः ह्रीं प्रज्ञां कालत्रयेऽपि सर्वस्य यथार्थविज्ञप्तिं द्वितीयखण्डे ल्ह्रीं परोक्तवादखण्डन प्रज्ञां च कह अव्ययं कथय मे उपदिश हस मच्चित्ते प्रकाशय एवं ध्यायन् प्रथमखण्डे ए अकारवाच्ये सर्वेश्वरे स्थितामित्यर्थः ह्रीं श्रीविज्ञानेश्वरीं क इत्यादिना ईल—ईड—जप स्तुहि चेत्यर्थः एवं चेत् सर्वविद्याप्राप्तिं सर्ववस्तुस्वभावविज्ञानं च प्रदिशति श्रीपरमेश्वरीत्यर्थः ।

अथ तृतीयखण्डे सकल ह्रीं—सर्वजनबुद्धिवृत्तिं किं च सं प्राणं कलयति रक्षतीति सकलः पतिः तस्य ह्रीं बुद्धिवृत्तिं वा सकलायाः स्वार्धांशसहितायाः "एष वा अर्धः पत्नीति" श्रुतेः तस्याः बुद्धिर्वृत्तिं वा कलाभिः अष्टदिक्पालदेवमात्राभिः सहितः सकलो राजेत्यर्थः "अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मरणात् तस्य ह्रीं बुद्धिं वृत्तिं वा एतद्यथोपयोगं ग्राह्यमित्यर्थः द्वितीयखण्डे हल—कर्षय आकर्षय वशमानयेत्यर्थः कः विसर्गस्य हकाररूपत्वात् कह—मां संभाषयेत्यर्थः ह्रीं—तद्बुद्धिवृत्तिं हस मयि प्रसादय

मदपराधं तुच्छीकुरु विस्मारयेत्यर्थः एवं भावयन् प्रथमखण्डे के— उद्यदादित्ये ए तन्निष्ठतेजोरूपां महारुणप्रभाव्यापिनीं ह्रीं शिवकामेश्वरीं श्रीविद्यां च ईल ईड जप स्तुहीत्यर्थः एवं कृते स्वायत्ताभवन्तीत्यर्थः ॥

अथ तृतीयखण्डे सकल ह्रीं—सकलं सर्वं हरति संहरतीति सकल ह्रीं सर्वसंहारकारिणीत्यर्थः हरतेर्विच् तां महाकालीरूपां देवीं द्वितीयखण्डे हसकानां अस्मच्छत्रूणां हं शिरः तस्य लः—खण्डनं तत्र ह्रीं बुद्धिर्यस्यास्त। अस्मच्छत्रुविनाशनोद्युक्तचित्तामित्यर्थः किं च आवृत्या हसकानां हानि अस्त्राणि तत्कृतमन्त्रादिप्रयोगाः तेषां लह्रीं—खण्डनबुद्धिकरीं सर्वकृत्यादिध्वंसकरीमित्यर्थः । प्रथमखण्डे के—अग्निमण्डले स्थितां ह्रीं—ज्वालामालापरिवृतां प्रत्यङ्गिरां भगवतीं ए—इत्याह्वयन् मच्छत्रून् तत्कृतदुष्टकृत्यानि च हन हनेति प्रार्थयन् ईल—ईड—जपस्तुहि एवं चेत्सर्वशत्रुविनाशः सर्वाभिचारनिवृत्तिश्च भवतीत्यर्थः ।

अथ तृतीयखण्डे सकल ह्रीं—सः वातः तस्य वायुवाचित्वात् कः अग्निः पित्तमित्यर्थः "अग्निः पित्तं पित्तमग्निरिति" वचनात् लः तुहिनकरः श्लेष्ममित्यर्थः तस्य कफकारित्वात् तेषां सकलानां हृ—परस्परहरणे न उपचयापचयकोपक्षयरूपेणा ई—प्राप्ताः ये ज्वरादयो रोगाः सार्वधातुका महारोगाश्च तान् समस्तानपि रोगान् मिनोति नाशयतीति सकल ह्रीं—ज्वरादिसर्वमहाव्याधिप्रशमनीमित्यर्थः प्रथमखण्डे के—आदित्यमण्डले तन्निविष्टां ह्रीं—श्रीआदिवैद्यं

नाथेश्वरीं देवीमित्यर्थः । ए–सप्तमी तत्पादे देवीचरणारविन्दयुगल इत्यर्थः ईल–इ–ईल इति छेदः इः तत्पादारविन्दप्रसरितं तेजः ईल–ईर–स्वशरीरप्राप्तं ध्यायस्व सूर्यमण्डलमध्यस्थदेवीचरणारविन्द-प्रभापरिवृतं स्वशरीरं भावयन्नित्यर्थः द्वितीयखण्डे किं च श्रीपरदेवते हस प्रसीद प्रसीद ममरोगान् नाशय नाशय इति प्रार्थयन् लह्रीं श्रीविद्यां कह जपेत्यर्थः ।

अथ प्रथमखण्डे ई लह्रीं–ई–फणी तस्य लः क्षतं तद्दंशन-विषमित्यर्थः तत् हरतीति ह्रीं सर्पादिसर्वविषविनाशकरीमित्यर्थः के–सुधासमुद्रे ए–महामणि द्वीपे आवृत्या लह्रीं चन्द्रमण्डलमध्यस्थ-श्रीमहात्रिपुरसुन्दरीं अमृतसरसाप्लाविनीं ए–तत्पादारविन्दयुगले–ई–अत्र इ–ई–ई इति छेदः इ – तत्पादारविन्दनिष्यन्दामृतमयं तेजः तस्य ई–मज्जिह्वायां शरीरे च ई–प्राप्तिं मच्छरीरबाह्याभ्यन्तरं पूरितमिति के–चित्ते भावयन्नित्यर्थः–तृतीयखण्डे सकल ह्रीं–अव्ययं हे सर्वव्याधिप्रशमनि देवि द्वितीयखण्डे हस–प्रसीद प्रसीद मम सर्व-विषाणि सर्वरोगांश्च नाशय नाशयेति प्रार्थयन् लह्रीं श्रीविद्यां कह–जपेत्यर्थः एवं कृते सर्वविषविनाशस्सर्वरोगविनाशश्च भवतीत्यर्थः ।

अथ प्रथमखण्डे के–आत्मनि स्वस्मिन् ए–सप्तमी मद्गृहान्तरे तत्रत्यमातृपितृसोदरपुत्रकलत्रादीनामित्यर्थः ईलह्रीं–ईल इ–ई ल इति च्छेदः इकारः भेदोक्तिवाची ई–दुःखभाववाची ल प्राप्तिवाची तथा च स्वगृहेनिष्ठानां परस्परभेदवाक्यजन्यदुःखभावप्राप्तिरित्यर्थः । तां ह हत्वा विनाश्य ई–मङ्गलवाणीं लक्ष्मीं म् अमति

प्रापयतीति उक्तसर्वदुःखविनाशपूर्वकमङ्गलवाक्सहितधनधान्यादि-सर्वसम्पत्प्रदात्री द्वितीयखण्डे हाः—हिंसकाः नाशकरास्तेषां उपद्र-वकारिणां दुष्टग्रहाणां च स ध्यानवाची क जपवाची हल यन्त्रादि-वाची तथा शत्रुकृतध्यानदुष्टमन्त्रजपयन्त्रादीनां तत्कृतसर्वाभिचार-कृत्यानां दुष्टग्रहोपद्रवाणां च ह्र निर्हरणेन ई म् प्रापयतीति सर्वदुष्ट-कृत्यादि विनाशपूर्वकमङ्गलदात्री तृतीयखण्डे सकलेषु विशेषकार्येषु मद्रक्षणार्थं ह्र अस्मद्धृदये ई गतिं स्थितिं म् माति करोतीति तत्त-त्काले यथोचितबुद्धिं दिशतीत्यर्थः। हसेत्यन्वीयते—हे परदेवते हस प्रसीद प्रसीद इति प्रार्थयतः गृहच्छिद्रनिवृत्तिः शत्रुकृताभिचारादि-निवृत्तिः दुष्टग्रहबाधानिवृत्तिः सर्वमङ्गलं लक्ष्मीप्राप्तिश्च। भवती-त्यर्थः।

अथ तृतीयखण्डे सकलं सर्वं ह्र हृदि ई — अभिलषितं म् माति दिशतीति ह्रीं सर्वाभीष्टप्रदायिनीं द्वितीयखण्डे कस्य सुखस्य ऐहिकामुष्मिकसर्वसुखस्य हलानि कर्षकाणि प्रतिबन्धकीभूतानि महा-पातकादिसर्वपापानि हरतीति कहल ह्रीं—समस्तपापविध्वंसनकारिणीं प्रथमखण्डे ए श्रीकामेश्वरे तदङ्कस्थितां ह्रीं — श्रीललितात्रिपुरसुन्दरीं ईल ईडे श्रीविद्यामन्त्रस्तोत्रादिभिः स्तौमि श्रीपरदेवते त्वं के—मच्चित्ते हस विलसेत्यर्थः। एवंकृते सर्वपापक्षयद्वारा ऐहिकामुष्मिकादिं सर्वसुखावाप्तिः श्रीपरदेवताप्रसादसिद्धिश्च भवतीत्यर्थः—

अथ प्रथमखण्डे ह्रीं श्रीमहात्रिपुरसुन्दरीं क ए इत्यादिना श्रीविद्यामन्त्रेण तथा क इत्यादिमाक्षरनामस्तोत्रेण त्रिशत्या सहस्र-

नामादिस्तोत्रेण तच्चरित्रेण ललितोपाख्यानादिना पूजादावशक्तोऽहं सदा त्वामेव ईल ईडे चिन्तयन् जपामि कीर्तयामि शृणोमि स्तौमी-त्यर्थः आवृत्या ह्रीं—भक्तवत्सलाश्रीमातास्वनामचरित्रश्रवणकीर्तनसंस्म-रणकारिणं स्वभक्तं वत्सं के सुधासमुद्रे ए श्रीपुरान्तः प्रदेशे ईल ईर प्रापयति चर्यायोगफलं सालोक्यं प्रयच्छतीत्यर्थः द्वितीयखण्डे क हे कामेश्वर ह्रीं — श्रीमातः त्वच्चरित्रनामस्मरणकीर्तनश्रवणशरणेन त्वत्पादकमलपूजायां समर्पितमिदं पत्रं पुष्पं फलं तोयं हल गृहाण स्वीकुरुष्व हस प्रसीद प्रसीद इति प्रार्थयन्तं स्वभक्तं प्रथमखण्डे ह्रीं—श्रीमाता के सुधासमुद्रे श्रीपुरान्तइत्यर्थः । ए—स्वपादकमले तत्समीप इत्यर्थः ईल प्रापयति चर्याक्रियानुष्ठानफलं सामीप्यं प्रयच्छतीत्यर्थः ।

आवृत्या द्वितीयखण्डे एवं चर्याक्रियानुष्ठानयोगी—क—कः स्वात्मा कवर्णस्यात्मवाचित्वात् सन्धिरत्र छान्दसः—ह्रीं श्रीत्रिपुर-सुन्दरीस्वरूपएव "ह्रीं ह्रीं शरीरिणी"ति स्मरणात् इति हृदि हल गृह्णाती "हल ग्रहण" इति धातोः आख्यातलोपश्छान्दसः दृढं सदा हृदि ध्यायतीत्यर्थः तस्मै स्वभक्ताय सा देवी माता हस प्रसी-दति तथैव प्रसीदति स्वसारूप्यं प्रयच्छतीत्यर्थः "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं" इति भगवत्स्मरणात्

एवं चर्याक्रियाध्यानयोगं चिरमाचरितवतस्सकलब्रह्मज्ञानयो-गिनः तज्ज्ञानप्रकारं तत्फलं चोपदिशति तृतीयखण्डे सकल ह्रीं — सकलं—ह्रीं इति छेदः अमभावश्छान्दसः सकलं जीवेश्वरजगद्रूपं

अनेककोटिब्रह्माण्डजातं सर्वमपि ह्रीं—अप्राकृतदिव्यमङ्गलविग्रहात्मकं सर्वकार्यैककारणकारणं सच्चिदानन्दमयं ब्रह्मरूपं अपरिमितानिर्वचनीय-शक्तिमत् श्रीत्रिपुरसुन्दरीसकलस्वरूपमेव न ततोऽन्यदस्ति किञ्चित् यथा लोके प्राकृतानामपि चिन्तामणि कामधेनु कल्पकवृक्षाणां सजा-तीयविजातीयरूपानेकपदार्थान् क्षणमात्रेण साधनान्तरं विनैव स्वयं एव स्रष्टुं महती शक्तिरस्तीति सुप्रसिद्धिः—तथात्वे सति श्रीपराशक्तेः श्रीजगन्मातुः शक्तिमहिमा केन वा वर्णितुं शक्यते न केनापि तस्मात् श्रीमहात्रिपुरसुन्दरीस्वरूपएवाहं सर्वदा सर्वथा सर्वात्मनेति तद्विषयकोपदेशादिप्रमाणश्रवणमननध्यानसमाधिनासाक्षात्कृतवतोऽस्य ईदृशज्ञानात्पूर्वमेव कलया देवीरूपया सहितस्सकलएव इदानीं तु तदज्ञानस्यापि निवर्तितत्वात् किं वक्तव्यं त्रिपुरसुन्दरीरूपएवाहमिति दृढतमं ज्ञानमेव ईदृशपरमभक्तिज्ञानयोगी तत्सायुज्यमेव प्राप्नोतीत्यर्थः एवं सालोक्यादि चतुर्विधसगुणमुक्तिप्रदायिनी श्रीपरदेवतेत्यर्थः—

पञ्चमी कैवल्यमुक्तिस्तु ज्ञानकाण्डे समुपदिश्यते ।

एवं समस्तशब्दार्थस्वरूपिणी सर्वदेवदेवतावन्दिता क्षिप्रप्रसा-दिनी श्रीमाता श्रीललिता त्रिपुरसुन्दरी श्रीराजराजेश्वरी सर्वेषां सर्वा-भीष्टप्रदायिनी श्रीविद्या श्रीपरदेवतेति शिवम् ।

ललिताकटाक्षलेशादुपासनाकाण्डसारार्थः ।
सङ्गृहतस्सङ्कलितस्सर्वेषां कल्पभूरुहो भूयात् ॥

त्रिकाण्डसारार्थबोधिन्यां उपासनाकाण्डसारार्थो नाम
द्वितीयभागस्समाप्तः श्री ललिताम्बिकायै नमः ॥

---

॥ श्रीललिताम्बिकायै नमः ॥

अथ त्रिकाण्डसारार्थबोधिन्यां ज्ञानकाण्डसारार्थस्तृतीयो भागः प्रारभ्यते ।

पराहन्तामयी देवी परमानन्दरूपिणी ।
स्वात्मरूपतया भाति द्वैताद्वैतविवर्जिता ॥

॥ अथ ज्ञानकाण्डसारार्थं दर्शयति ॥

तृतीयकूटे प्रथमं साधनचतुष्टयमुपदिशति सकलेति सकलं अनेककोटिब्रह्माण्डरूपं सर्वं प्रपञ्चं ह्र नश्वरं हरतेर्विच् अनित्यमित्यर्थः ई ब्रह्मैव शुद्धचिद्बीजत्वात् सं शाश्वतं स्यति स्वस्मिन्नेव सर्वं अन्तयति नाशयतीति सं "षोऽन्तकर्मणि" इति धातोः क्विप् सर्वलयाधिष्ठानं सत्यं नित्यमित्यर्थः कल कलय एवं नित्यानित्यविवेकमवधारयेत्यर्थः "कल शब्दसङ्ख्यानयो" रिति धातोराख्यातलोपश्छान्दसः "नित्योऽनित्यानां चेतनश्चेतनानां ततोऽन्यदार्तमि" ति श्रुतेः तस्मात् प्रथमखण्डे के ऐहिकामुष्मिकसर्वलोकसुखे ई ईलेति छेदः ई अव्ययं दुःखभावं ईल ईर अवगच्छ सर्वलोकसुखानामपि दुःखोदुर्कत्वात् परमविरक्तो भवेत्यर्थः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति छान्दोग्ये......"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेने" ति मुण्डके च श्रवणात् ह्रीं तत्र ह्र हृत् अन्तःकरणं तस्य किं च हृकृणां हकारो गर्ववाची रवर्ण इन्द्रियवाची "हरशङ्करे हरौ हं सरण रोमाञ्चवा-

जिष्णुगर्वेप्रचेतसी" ति कोशात् "रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च । इन्द्रिये धनरोधे चे" त्येकाक्षरकोशाच्च हरन्ति विषयानिति वा इन्द्रियाणीत्यर्थः तेषां अन्तःकरणस्य अत्यासक्तेन्द्रियाणां च ई गतिः तत्तद्विषयेषु व्यापारः तां मिनोति नाशयतीति म् निग्रह इत्यर्थः अन्तःकरणनिग्रहं शमं बाह्येन्द्रियनिग्रहं दमं च ईल आप्नुहि पुनश्च ह्रीं अत्र ह्री तत्तदिन्द्रियविषयगतिः प्रश्लिष्टा ई तत्कारणभूता-वासनेत्यर्थः तां मिनोति नाशयतीति म् वासनानाशः तं इन्द्रिय-विषयप्रवृत्तिवासनानिग्रहरूपां उपरतिं ईल आप्नुहि । ए—सप्तमी हेतौ आध्यात्मिकाधिभौतिकाधिदैविकतापे निमित्ते सत्यपि एकारप्रश्लिष्टा-कारोऽत्र गृह्यते अ—अव्ययं ईर न शब्दय मौनीभव सर्वंसहस्व तितिक्षावान् भव इत्यर्थः किं च के शब्दे गुरु वेदान्तवाक्यजाते ह्रीं बुद्धिं ईर सम्यक् प्रवर्तय श्रद्धां कुर्वित्यर्थः ए सप्तमी आत्मनि लक्ष्ये ह्रीं बुद्धिं ईर समाधेहि समाधानं कुर्वित्यर्थः "शान्तोदान्तउपरत-स्तितिक्षुः समाहितोभूत्वाऽत्मन्येवाऽत्मानं पश्यती" त्यादि श्रुतेः किं च ह्रीं—तत्र ह्वन्धः जननमरणरूपस्संसारबन्धः तस्य ई गतिं अपगमनं मुक्तिमित्यर्थः । के चित्ते ए गौरवे ईर दृढमवधारयेत्यर्थः । तीव्रमुमुक्षावान् भवेति यावत् ।

## ॥ एवं साधनचतुष्टयोपदेशः ॥

एवं नित्यानित्यविवेकपरमवैराग्यशमदमोपरति तितिक्षा श्रद्धा समाधानरूपशमादिषट्कतीव्रमुमुक्षावान् साधनचतुष्टयसम्पन्नस्त्वं आ-वृत्या ए हे तात । के कायति तत्त्वमुपदिशतीति कः तस्मिन् तत्त्वो-

पदेष्टृ गुरौ ईर गच्छ तन्निकटे आवृत्या ईर शब्दय स्वसंसारनिवृत्युपायं पृच्छेत्यर्थः । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियंब्रह्मनिष्ठम् तस्मै सविद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्यां" इति मुण्डकोपनिषच्छ्रुतेः आवृत्या कः स गुरुः ए हे वत्स ईल ई ईलेति छेदः ई अव्ययं दुःखभावं इल त्यज मा भैष्टेति भावः ह्रीं संसारबन्धनिवृत्युपायः अस्तीति ईर उपदिदेशेत्यर्थः एवं गुरुसमागमनम् ।

## ॥ अथ उपनिषच्छ्रवणम् ॥

तदुपदेशप्रकारं दर्शयति

तृतीयकूटे सकलेति नित्यानित्यविवेक वैराग्यशमदमादिसम्पन्नस्त्वं मुमुक्षुः ह्रीं संवित् प्रापकत्वादुपनिषदं कल कलय मुख्यप्रमाणत्वात् विचारयेत्यर्थः "कल शब्दसङ्ख्यानयो" रिति धातुः आख्यातलोपश्छान्दसः "तं त्वौपनिषदं पुरुषं पृच्छामि" "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादि श्रुतेः "शब्दादेव प्रमित" इति ब्रह्मसूत्राच्च ।

अथोपनिषत्सुग्राह्यसिद्धान्तसारमुपदिशति सः परमात्मा ह्रीं अपरिमितशक्ति मायां कल कलयति स्वयमेव स्वात्मनि सम्भावयति "तस्मान्मायी सृजते विश्वमेतत्" "सोऽकामयत बहुस्यां प्रजायेयेति" तदैक्षत इमान्नुसृजइति" "मायाचाविद्या च स्वयमेव भवति" "परास्य शक्तिर्विविधैव श्रूयते" इत्यादि श्रुतेः एवं उपनिषत्सारसङ्ग्रहं ।

ततः सकलं जायत इति तटस्थलक्षणं दर्शयति—ह्रीमित्यव्ययं चिद्वाचकं ह्रीङ्कारस्य पञ्चप्रणवान्तर्गतत्वेन प्रणववाच्यत्वात्। ह्रीङ्कार-वाच्यात् परमात्मनः सकलं विश्वं जातमित्यर्थः सकलेत्यत्र अमभाव-श्छान्दसः "ततस्तु जातं सकलं विचित्र" मिति "यतो वा इमानि भूतानि जायन्ते" इत्यारभ्य "आनन्दात् हि एव खल्विमानि भूतानि जायन्ते" इत्यादि श्रुतेः "जन्माद्यस्य यत इति ब्रह्मसूत्राच्च जातं विश्वं किं रूपमिति चेत्तदपि दर्शयति—सकलं विश्वं ह्रीं ह्रीङ्कारस्य पञ्चवर्णा-त्मकत्वात् पृथिव्यप्तेजोवाय्वाकाशाख्यपञ्चभूतात्मकीमित्यर्थः "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" त्यादिश्रुतेः "पञ्चभूतमयं विश्वं मरीचिजलसन्निभ" मित्यादिस्मृतेश्च।

॥ अथ ईश्वरस्वरूपं दर्शयति ॥

ह्रीं चिदात्मा सकलः कलयासहितश्शुद्धमायावच्छिन्नः माया-प्रतिबिम्बित इतिवार्थः

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"

"रूपंरूपंप्रतिरूपोबभूवे" त्यादिश्रुतेः

॥ अथ जीवस्वरूपं दर्शयति ॥

सः परमात्मा ह्रीं मलिनसत्वप्रधानामविद्यां अन्तःकरणं च कलयति बध्नाति प्रविष्टवत् भावयति तदा जीवभावापन्न इत्यर्थः "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "अन्तः

प्रविष्टश्शास्ता जनानां" "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादि श्रुतेः ।

अथ पञ्चीकरणोपलक्षणं त्रिवृत्करणमप्याह—सकलान् व्युत्क्रमेण पृथिव्यप्तेजांसि भूतानि लकारस्य पृथ्वीबीजत्वात् कवर्णस्य जलवाचित्वात् सकारः आश्रयाशोऽग्निः स्यति नाशयति स्वगतमिति व्युत्पत्तेः षोन्तकर्मणीति धातोः ह्रीं हरति परस्परं भेदयति एकैकं त्रिवृत्करोति इति यावत् "तत् त्रिवृदेकैकामकरोदि"ति छान्दोग्यश्रुतेः पञ्चीकृतानि पञ्चमहाभूतानीत्यर्थः एवं पञ्चीकरणोपलक्षणं त्रिवृत्करणम् ।

एवं स आत्मा ह्रीं विद्याविद्या तत्कार्यात्मकं सर्वं जगत् कल कलयति स्वयमेव स्वात्मनि कल्पयतीत्यर्थः ।

"तदात्मानं स्वयमकुरुत" "यथोर्णनाभिस्सृजतेऽत्तिसर्वं" इत्यादि श्रुतेः "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् कर्ता शास्त्रार्थवत्वात्" इत्यादि ब्रह्मसूत्राच्च ।

॥ एवमध्यारोपक्रमसारार्थः ॥

अथापवादक्रमसारमुपदिशति

"अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते" इति श्रवणात्

अथ सः साधनचतुष्टयसम्पन्नस्त्वं ह्रीं परमात्मशुद्धचिदं परं ब्रह्मैवाहमिति कल कलय श्रवणमनननिदिध्यासनैः साक्षात्कुर्वित्यर्थः । ह्रीङ्कारस्य ब्रह्मवाचित्वात् "हृदयागारवासिनी हृल्लेखे"ति

श्रुतेरात्मवाचित्वाच्च "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः "अहं ब्रह्माऽस्मीत्यवसानाएव सर्वे विधयस्सर्वाणि चेतराणि प्रमाणानि" इति शङ्करभगवत्पादशारीरकचतुस्सूत्रीभाष्योक्तेश्च ।

अथ श्रवणमनननिदिध्यासनसाधनसारभूतं महावाक्यचतुष्टयं निरूपयति—

तत्र तावत् "प्रज्ञानं ब्रह्मे"ति वाक्यार्थमुपदिशति—सकलेति संज्ञानं—"संज्ञीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इति कोशात् प्रज्ञानमित्यर्थः अत्राप्यमभावश्छान्दसः ह्रीं संविद्वाचकत्वात् ब्रह्मेति—कल—कलय अवगच्छेत्यर्थः अत्र ब्रह्मणः स्वरूपलक्षणमप्युपदिशति सकलेति—संच कंच लं चेति सकलं स्यति स्वस्मिन्नेव सर्वमन्तयति नाशयतीति सं षोऽन्तकर्मणीति धातोः क्विप् सर्वलयाधिष्ठानत्वेन सत्यमित्यर्थः कं—कन्यते स्वयं प्रकाशत इति कं कनतेः क्विप्—चिद्रूपमित्यर्थः लीयते अनेनेति लं लिनोतेः क्विप् आनन्दस्वरूपमित्यर्थः तथा च सच्चिदानन्दं ह्रीं ब्रह्मेति स्वरूपलक्षणं सिद्ध्यति "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति "नित्यं विज्ञानमानन्दं ब्रह्मे"त्यादिश्रुतेः—

अथ "तत्त्वमसी"ति वाक्यमुपदिशति—तत्र तत्पदवाच्यार्थसर्वसमष्ट्युपाधिमान् सर्वज्ञस्सर्वकर्ता ईश्वरः त्वं पदवाच्यार्थः स्थूलसूक्ष्मकारणशरीरोपाधिमान् किञ्चिज्ज्ञः जीवात्मा असीत्यैक्यं बोध-

यति सः चिन्मात्रः तत्पदलक्ष्यार्थः कल कलय असीत्यर्थः अस्य लोण्मध्यमत्वात् त्वमिति सिध्यति त्वं पदलक्ष्यार्थः प्रत्यगात्मा असीति चिदैक्यं वोधयति तथा च सोऽयं देवदत्तइत्यत्रेव जहदजहल्लक्षणाया अखण्डचैतन्यमात्रं लक्ष्यत इति भावः—

अथ तत्पदार्थशोधनप्रकारमप्याह—सकलेति सूतइति सः "षूञ् प्रसव" इति धातोः क्विप् कायति व्यवहरत्यनेनेति कः "कैशब्द" इति धातोर्लुक् लीयतेऽस्मिन्निति लः "लीञ् लयइति धातोः क्विप् तान् सकलान् सृष्टिस्थितिसंहारकारकब्रह्मविष्णुरुद्राख्यविराड्हिरण्यगर्भान्तर्याम्याभिमानिक समष्टिसर्वस्थूलसूक्ष्मकारणदेहान् हरतीति सकल ह्री—समष्ट्युपाधित्रितयं सर्वस्थूलसूक्ष्मकारणात्मकं मायामयत्वात् विहाय ईं चैतन्यमात्रं लक्ष्यत इत्यर्थः । एवं तत्पदार्थशोधनम् ।

## ॥ अथ त्वं पदार्थशोधनम् ॥

एवं सः जाग्रदभिमानी विश्वोपाधिः स्थूलदेहः कः स्वप्नाभिमानी तैजसोपाधिः सूक्ष्मदेहः लः—सुषुप्त्यभिमानी प्राज्ञोपाधिः कारणदेहः एतान् स्थूलसूक्ष्मकारणदेहान् हरतीति सकल ह्री "हृञ् हरण" इति धातोर्विच् देहत्रयं विहाय ईं—प्रत्यक् चैतन्यं लक्ष्यत इति भावः ।

अथ "अहं ब्रह्मास्मी"ति वाक्यार्थमाह—सः प्रत्यगात्मा अहं पदार्थः ह्रीमिति ब्रह्म कल कलयामि अस्मि भवामीत्यर्थः ।

अथ "अयमात्मा ब्रह्मे" ति वाक्यार्थमप्याह "सर्वानुभूति-ह्रींरेऽयमात्मा" इति श्रुतेः सः चिदात्मा अयमात्मेत्यर्थः ह्रीं ब्रह्मेति कल कलय एवं "आचार्यवान् पुरुषो वेदे" ति श्रुतेः आचार्य-मुखादेव ऋग्वेदसामवेदयजुर्वेदाथर्वणवेदोदितमहावाक्यचतुष्टयविचा-ररूपश्रवणमनननिदिध्यासनसमाधिभिः ब्रह्मीभवेत्यर्थः सिद्धः ।

॥ इति महावाक्यचतुष्टयनिरूपणम् ॥

अथ सर्वप्रपञ्चस्य मायामयत्वमाह सकलेति ।

सकलं कलाभिरंशैस्सहितं सर्वं कार्यकारणरूपं द्वैतं ह्रीं मायैव ह्रीङ्कारस्य मायावाचित्वात् सर्वं मायामयं मिथ्येत्यर्थः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः" इत्यादि श्रुतेः । एवं सर्वप्रपञ्चस्य मिथ्यात्वानुभवेन सकलं सर्वं हरतीति सकल ह सर्वहरणं तेन ई शुद्धचिन्मात्रं स्वयमव-शिष्यत इति भावः ।

ब्रह्मणि कल्पितसकलजगतामपि ब्रह्माभिन्नत्वेन अध्यस्तानां तदधिष्ठानसत्तातिरिक्तसत्ताऽसम्भवात् सर्वं ब्रह्मैवेत्युपदिशति स-कलेति ।

सकलं सर्वं ह्रीं ब्रह्मैव "असति बाधके सर्वं वाक्यं साव-धारणं" इति नियमात् सत्यचिद्घनमखण्डैकरसमित्यर्थः ।

"सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किञ्चन" "एक-मेवाद्वितीयं ब्रह्म" "निर्गुणं निष्कळं शान्तं निरवद्यं निरञ्जनम्"

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च" "प्रज्ञानघनएवारेऽयमात्मा" इत्यादि श्रुतिभ्यः ।

एवं ब्रह्मतत्वप्रतिपादकसर्वोपनिषत्सारसङ्ग्रहरूपं श्रवणमुपदिश्य तन्मननसाधनमुपदिशति ।

## ॥ अथ शब्दवर्णतत्वविचारः ॥

अत्रादौ शब्दानां नित्ययोः धातुप्रत्यययोर्नित्यप्रकृतिपुरुषात्मकत्वं सप्तानां महदादितत्वानां सप्तविभक्तिरूपत्वं तेषां प्रत्येकं सात्विकराजसतामसगुणत्रैविध्यात् सप्तविभक्तीनां त्रि त्रि वचनरूपत्वं सम्बुद्धेः मध्यरूपत्वं तत्रज्ञानशक्तिमत्कर्तृबोधकत्वं सुबन्तानाम् ।

तत्रापि सात्विकांशाधिक्यात् पुल्लिङ्गत्वं राजसांशाधिक्यात् स्त्रीलिङ्गत्वं तामसांशाधिक्यात् नपुंसकत्वं च अथ तिङन्तानां क्रियाबोधकत्वं तत्र अस्तित्वबोधकत्वात् प्रथमपुरुषत्वम् सन्निकृष्टबोधकत्वान्मध्यमपुरुषत्वं स्वानुभूतिबोधकत्वादुत्तमपुरुषत्वं गुणत्रैविध्यात्तेषामपि त्रि त्रिवचनत्वं अव्ययानां इच्छाशक्तिमत्वं अविविक्तत्रिगुणसाङ्कर्यात् लिङ्गविभक्तिवचनशून्यत्वं एवं शब्दार्थात्मकं प्रपञ्चरूपमिति विजानन्ति शब्दसाङ्ख्यतत्वरसिकाः ।

अत्र सूक्ष्मविचारे धातुप्रत्ययानामपि वर्णसमुदायजन्यत्वात् अकारादिमातृकाक्षराणामेव सर्वकारणत्वं इति सिद्धान्तः मातृकावर्णसङ्ख्या एकपञ्चाशदेव एकपञ्चाशद्वर्णानां मातृकेत्येकत्वेन गणनात्

एकपदा एकरूपा स्वरव्यञ्जनभेदेन द्विपदा द्विविधा स्वरस्पर्शान्तःस्थोष्मभेदात् चतुष्पदा चतुर्विधा स्वरकादिपञ्चवर्गान्तःस्थोष्मभेदादष्टपदा अष्टविधा ळ—क्ष वर्णयोः वर्गान्तरत्वेन ग्रहणान्नवपदा नवविधा च भवति मातृकेत्यर्थः ।

"गौरीमिमायसलिलानितक्षति एकपदी द्विपदी सा चतुष्पदी अष्टापदी नवपदी बुभूविषी सहस्राक्षरा परमे व्योमन्" इति श्रुतिसिद्धत्वात् ।

अत्र केचित् कषयोगरूपत्वात् क्षकारं विहाय पञ्चाशदिति अपरे ळळयोरभेदात् ळकारं च विहाय एकोनपञ्चाशदिति अन्ये तु षोडशस्वरेषु ऌकारमपि विहाय अष्टचत्वारिंशदिति च वदन्ति तन्नाद्रियन्ते वेदमन्त्रार्थतत्वविदः ।

क्षकारस्य वर्णानां नायकमणिवत् मेरुरूपत्वात् 'क' कारस्यकण्ठ्यत्वात् 'षकारस्य मूर्धन्यत्वाच्च तयोरूर्ध्वाधस्स्थयोः समाहारात् मध्यवर्णानां 'क्ष'कारस्य समष्टिरूपत्वात् अन्तर्मातृकान्यासे "हळक्ष" मित्याज्ञाचक्रे विन्यासविधानाच्च ।

किं च ळकारस्य ळळयोरभेद इति न सर्वत्र युक्तं ऋग्वेदे "अग्निमीळे" "अहेळमान" इत्यादाववश्यग्राह्यत्वात् "ताळः हळे" त्यादावपि ळकारस्य ग्राह्यत्वात् "ळक्ष" योः श्रुत्युक्तनवपदीत्वभङ्गाद्वेदविरुद्धत्वाच्च ।

विक्षेपशक्त्यात्मिकाऽविद्याशक्तिरूपव्यष्टिकारणोपाधिमान् प्राज्ञात्मा जीवः अत्र औप्रत्यये सति कौ इति द्विवचनस्य व्यष्टिकारणोपाधि-रूपप्राज्ञस्यैव व्यष्टिसूक्ष्मशरीरोपाधितैजसात्मकतयाऽवस्थितत्वात् प्राज्ञतैजसौ जीवावित्यर्थः कान् इति बहुवचनप्रत्ययस्य प्राज्ञतैजसयो-रेव व्यष्टिस्थूलशरीरोपाधिविश्वरूपतयाऽवस्थितत्वात् प्राज्ञतैजसविश्वा-जीवास्त्रयः जाग्रत्स्वप्नसुषुप्त्यवस्थाभेदादुक्तोपाधिविशिष्टा इत्यर्थः । अत्र ईश्वरः उक्तजीवान् स्वमायाशक्तेराविश्चकारेत्यर्थः ।

उक्तजीवानां तत्तत्कर्मानुभवयोग्यं प्रपञ्चमाकलयति पूर्वोदिता-वरणविक्षेपशक्तिरूपत्रिगुणात्मिकाविद्यायाः त्रिगुणात्मकसूक्ष्मपञ्च-कारणभूतानां पञ्चतन्मात्राणामाविर्भावं दर्शयति—तत्र टाप्प्रत्यययुक्तेन "केन" कायति शब्दयतीति कः शब्दः "कैशब्द" इति धातोः क्विप् तेन शब्दतन्मात्रात्मकत्रिगुणरूपसूक्ष्माकाशात्मना अविद्यायाः ईश्वर आविर्बभूवेत्यर्थः अत्र सूक्ष्माकाशस्थसात्त्विकांशएव श्रोत्रेन्द्रियं "काभ्यां" श्रोत्रेन्द्रियेण सह सूक्ष्माकाशराजसांशजातवागिन्द्रियेण च द्वाभ्यां इन्द्रियाभ्यामित्यर्थः "कैः" सूक्ष्माकाशतामसांशैरित्यर्थः 'ङे' प्रत्यययुजे "काय" त्रिगुणात्मकसूक्ष्मवायुरूपाय 'तादर्थ्ये चतुर्थी' तदात्मना भवितुं स्वयमभवत् स्वमायाशक्त्या वायुरूपो भवतीत्यर्थः ।

"को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेक्विषु । विष्णावाहतशब्दे-ऽब्धौ सितवर्णे वसौ द्युतौ । कं शिरोऽम्बुसुखे क्लीबं" इति नानार्थ-

रत्नमालाभिधानात् कवर्णस्य ब्रह्मविष्णवीश्वरवाचित्वात् आत्मवाचित्वात् शब्दवाय्वग्निजलवाचित्वात् च उक्तार्थघटनात् अत्र सूक्ष्मवायुनिष्ठसात्त्विकांशएव त्वगिन्द्रियमासीत् "काभ्यां" त्वगिन्द्रियेणसह सूक्ष्मवायुनिष्ठराजसांशजातपाणीन्द्रियेण च द्वाभ्यां इन्द्रियाभ्यामित्यर्थः । "केभ्यः" सूक्ष्मवायुनिष्ठतामसांशेभ्यः तामसांशैरिति भावः 'ङस्' प्रत्यययोगात् "कात्" त्रिगुणात्मकसूक्ष्मभूततेजसः । तन्निष्पत्तिनिमित्तं स्वयमभवत् मायाशक्त्यासूक्ष्मतेजोरूपोऽभवदित्यर्थः । एतत्सूक्ष्मभूततेजोनिष्ठसात्त्विकांश एव चक्षुरिन्द्रियमासीत् "काभ्यां" चक्षुरिन्द्रियेण सह एतद्राजसांश भूतपादेन्द्रियेण च द्वाभ्यामिन्द्रियाभ्यामित्यर्थः । "केभ्यः" एतत्तामसांशेभ्यः सूक्ष्मतेजोभूततामसांशैरित्यर्थः अथ 'ङस् प्रत्यययुजः कस्य त्रिगुणात्मकसूक्ष्मभूतस्य जलस्योत्पादनाय क्रमात्तत्तत्कारणोपाधिना आविर्बभूव सूक्ष्मभूतं जलमभूदित्यर्थः । एतत्सूक्ष्मभूतरसनिष्ठसात्त्विकांशएव रसनेन्द्रियं "कयोः" रसनेन्द्रियेण सह रसराजसांशभूतोपस्थेन्द्रियेण च द्वयोरिन्द्रिययोरुत्पत्तिरित्यर्थः । "कानां" सूक्ष्मजलभूततामसानां अंशैरित्यर्थः । अथ 'ङि' प्रत्यययुक्ते "के" त्रिगुणात्मकसूक्ष्मभूतपृथिवीनिमित्तं क्रमात्तत्कारणोपाधिराविर्बभूव । सूक्ष्मभूतगन्धात्मकोऽभूदीश्वरइत्यर्थः । एतत्सूक्ष्मभूतपृथिवीसात्त्विकांशएव घ्राणेन्द्रियं "कयोः" घ्राणेन्द्रियेण सह उक्तसूक्ष्मभूतराजसांशपाय्विन्द्रियेण च द्वयोरिन्द्रिययोरुत्पत्तिरित्यर्थः । "केषु" सूक्ष्मभूतपार्थिवतामसांशेषु तन्निष्ठतामसांशैरित्यर्थः ।

कवर्णस्य पृथिवीत्वं तु 'कु' इति धातोः क्विप्प्रत्यये सति सिध्यति—

किं चात्र एकवचनप्रत्यययुजां कवर्णवाच्यानां पञ्चसूक्ष्मभूत-सात्विकांशानां समष्ट्या ज्ञान मनोबुद्धि चित्ताहङ्काराख्यान्तःकरण-पञ्चकं जातं कवर्णद्विवचनप्रत्यययुजां सूक्ष्मभूतराजसांशानां समष्ट्या-प्राणापानव्यानोदानसमानाख्यप्राणपञ्चकं च जातमित्यर्थः ।

कवर्णबहुवचनप्रत्यययुग्भिः सूक्ष्मपञ्चभूततामसांशैः प्रत्येकं पञ्चीकृतैः पञ्चमहाभूतानि स्थूलानि कल्पयामास कवर्णप्रथमैकवचन-प्रथितः सर्वेश्वरइत्यर्थः ।

सम्बुद्धिप्रथमाविभक्तेस्त्वयमर्थः प्रथमा द्वितीयाविभक्तिमध्यस्थ-त्वात् जीवेश्वरभावनिर्मुक्ताः जीवन्मुक्ताः तत्रैकवचनस्य ब्रह्मविद्वरी-यान् द्विवचनस्य ब्रह्मविद्वरः बहुवचनस्य ब्रह्मवित् इति ब्रह्मविदः जाग्रदाद्यवस्थात्रयसत्वात् बहुवचनबोधितत्वं ब्रह्मविद्वरस्य प्रपञ्च-व्यवहारस्य स्वप्नप्रायत्वात् द्विवचनबोधितत्वं वरीयसः सुप्तप्रायत्वात् सुप्तावस्थाप्राधान्यात् एकवचनबोधितत्वं वरिष्ठस्य तु तुरीयावस्थाया एव प्राधान्यात् वाचामगोचरत्वान्नोक्तमिति

एवं च "तस्माद्वा एतस्मादात्मनआकाशस्सम्भूतः आकाशा-द्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" त्यादि क्रमेण सूक्ष्मपञ्च-भूतानि समाकल्प्य तत्सात्विकांशैः क्रमात् ज्ञानेन्द्रियपञ्चकं तत्सम-ष्ट्या अन्तःकरणपञ्चकं च तथा तद्राजसांशैः कर्मेन्द्रियपञ्चकं च

तत्समष्ट्या प्राणादिपञ्चकं च एतेषां तत्त्वानां सन्निवेशात् सूक्ष्मशरीरमिति निर्णीय तद्व्यष्टिसमष्ट्युपाधितैजसहिरण्यगर्भभावमापन्नः पूर्वोक्तपञ्चीकृतमहाभूतैः सर्वस्थूलशरीराणि तन्निवासयोग्यभूरादिलोकांश्च निर्माय तद्व्यष्टिसमष्टिरूपोपाधिभेदेन विश्वविराड्रूपमापन्नः सर्वज्ञः सर्वशक्तो महाप्रभुः कवर्णप्रथमाविभक्तिवचनत्रितयवेद्य ईश्वरः ककारसप्तमीविभक्तिवचनवाच्येषु स्वर्गादि भूम्यादि पातालादि लोकेषु कवर्णषष्ठीविभक्तिवचनवाच्यानां देवादिमनुष्यतिर्यगादि असुरादि जीवानां कवर्णपञ्चमीविभक्तिवचनवाच्येभ्यः पुण्यप्राधान्य पुण्यपापप्राधान्य मिश्रप्राधान्य पुण्यपापमिश्रप्राधान्यादिविचित्रकर्मनिमित्तेभ्यः कवर्णचतुर्थीविभक्तिवचनवाच्येभ्यः तारतम्येनोक्तजीवानां तत्तत्कर्मफलानुसारिफलानुभवेभ्यः कवर्णतृतीयाविभक्तिवाच्यैः उक्ततत्तत्कर्मफलानुभवयोग्य तत्तादृशशरीरैः कवर्णद्वितीयाविभक्तिवचनवाच्यान् देवादि मनुष्यादि तिर्यगादि असुरादि अनन्तनानाविधजीवान् स्वमायाविद्याशक्तिवैचित्र्यात् स्वस्मिन् स्वयमेव भगवान् बहिरवस्थितानीवोपपादयदिति । कवर्णसर्वविभक्तिवचनप्रत्ययार्थः ।

## ॥ एवं वर्णतत्वविचारः ॥

एवं कवर्णस्य सर्वजगज्जीवेश्वरात्मकार्थकत्वात् तादृशस्वमनुनिष्ठकवर्णतत्त्वार्थरहस्यमुपदिशति ।

कः तत्र क् परं ब्रह्म "कं ब्रह्म खं ब्रह्मे" ति श्रुतेः "को ब्रह्मात्मानिलार्के "ति कोशाच्च अत्रत्यविसर्गः हकाररूपः "हकारोऽ-

न्त्यकलारूप" इति स्मरणात् । अत्र अकारस्यापि सूक्ष्मरूपतया सत्वात् अश्च हश्च तयोस्समाहारात् अहमिति सिध्यति तस्मात् ब्रह्मैवाहमस्मीत्यर्थः "अहं ब्रह्मास्मि" "तत्त्वमसि" "अयमात्मा ब्रह्म" तत्त्वमेव त्वमेव तदि"त्यादि श्रुतेः ए सप्तमी "अकारः सर्ववर्णाग्र्यः प्रकाशः परमश्शिवः" इति स्मरणात् "अकारो ब्रह्मविष्णवीशकमठेष्वि"ति कोशाच्च ब्रह्मरूपेमयीत्यर्थः ।

"तस्माद्वा एतस्मादात्मन" इति श्रुतेः किं च अकारस्य पादवाचित्वात् ब्रह्मभूते मयि पादांशइत्यर्थः । "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" इति श्रुतेः "विष्टभ्याहमिदं सर्वमेकांशेन स्थितो जगदि"ति भगवत्स्मरणाच्च—

एकदेशांश इत्यर्थः "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुत्या ब्रह्मण्यंशकल्पनानर्हत्वात् शिष्यबुद्ध्यवधानमात्रमित्यर्थः ईल ह्रीं अत्र इ इल ह्रीमिति छेदः—इ अनेकविधाश्चर्यजनकं "इस्स्याच्चित्रकभेदोक्त्यो" रिति कोशात् इ इल ईलेत्यन्वयः इलः स्वप्नः "इल स्वप्नक्षेपणयो" रिति धातुः तथा च अविद्याऽवरणविक्षेपविजृम्भितनानाविधकार्यकारणशोकमोहमोदभयसुखदुःखप्रदविचित्र—दृढ—स्वप्नवदित्यर्थः ह्रीं—मायाऽविद्यावरणविक्षेपशक्तिरूपकारणप्रकृतिः ह्रीङ्कारस्य प्रकृतिबीजत्वात् तत्कार्यभूतसर्वप्रपञ्चरूपश्चेत्यर्थः । ह्रीङ्कारस्य सर्वभुवनवाचित्वात् यथा स्वप्नद्रष्टुः स्वजाग्रत्प्रबोधे सति स्वाप्नदृश्यानां मिथ्यात्वावगमात् नास्तीति निश्चीयते—तथा अहमेव ब्रह्मेति सम्यक् तुरीयतत्वप्रबोधे सति मायाऽविद्याप्रकृतिकार्यकारणभूतजाग्रत्सर्वप्रपञ्चस्यापि

मिथ्यात्वावगमात् केवलब्रह्मव्यतिरिक्तप्रपञ्चोऽपि नास्तीत्याह एका-रान्ते प्रश्लिष्टाकारेण अ—नास्तीत्यर्थः ।

"ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ।
सर्वभूतस्थमात्मानं सर्वभूतानि चाऽत्मनि ॥
सम्पश्यन् ब्रह्मपरमं याति नान्येन हेतुना ।
... ... ... ...
एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कळमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥
... ... ... ...
जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत् प्रकाशते ।
तत् ब्रह्माऽहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥
त्रिषु धामसु यत् भोग्यं भोक्ता भोगश्च यत् भवेत् ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः" ॥

इत्याद्यनेकश्रुतिभ्यः ।

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम् ।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥

गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः" ॥

इत्यादि स्मृतिभ्यश्च—

एवं प्रपञ्चस्य मिथ्यात्वं ब्रह्मणः सत्यत्वं च प्रदर्श्य तत्र दृष्टान्तान् दर्शयति—

यथा स्वप्ने तद्दृश्य सृष्ट्यादितत्वं न विज्ञायते भ्रमरूपत्वात् तथा जगत्सृष्ट्यादिकमपि नविज्ञायत एव जाग्रत्सर्वप्रपञ्चस्यापि मायाऽविद्यावरणविक्षेपशक्तिकार्यरूपतया ब्रह्मण्यध्यस्तत्वात् तस्मात् स्वप्नजाग्रत्प्रपंचसृष्टीनामनिर्वचनीयख्यातित्वमेव मायामयत्वात् ।

किं च यथा स्वप्नदृश्यं सर्वं जाग्रदादि कृतनानाविधवासनात्मकावरणविक्षेपशक्तिरूपमेव—

तथैव जाग्रद्दृश्यं सर्वमपि जन्मान्तरीयजाग्रत्स्वप्नादिकृतनानाविधवासनात्मकावरणविक्षेपशक्तिरूपमेवेति निश्चीयते—तस्मात् सर्वथा सर्वप्रपञ्चोऽपि मिथ्यैवेत्यर्थः अयं स्वप्नदृष्टान्तः दृष्टिसृष्टिपक्षे सृष्टिदृष्टिपक्षेऽपि सम्पूर्णएवेति सिद्धान्तः ।

"तस्मान्मायी सृजते विश्वमेतत्" "तस्य त्रय आवसथास्त्रयः स्वप्नाः" उत्तिष्ठत जाग्रत प्राप्यवरान्निबोधत" इत्यादिश्रुतेः ।

"स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथे"ति "मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्याचोदिता श्रुतौ । उपायः सोऽवताराय नास्ति भेदः कथञ्चने"त्यादि स्मरणाच्च—

जाग्रत्प्रबोधात्स्वप्नदृश्यबाधानिवृत्तिमनेनैवोपदिशति—

ईल ह्रीमिति—ईलः चित्रभयङ्करस्वप्नः तस्य हृ—हरतीति निवारकं हरतेः क्विप् ईं—ई ज्ञप्तिः तां माति निर्मातीति म् मातेः क्विप् जाग्रद् ज्ञानं जाग्रत्स्वात्मबोधः विचित्रभयङ्करस्वप्ननिवर्तकः जाग्रत्स्वात्मबोध इत्यर्थः—तथा पुनः के—तुरीयेब्रह्मणि ह्रीं कल्पितसर्वप्रपञ्चमपि ए—अत्र अ ई इति छेदः—अकारस्य प्रत्यग्ब्रह्मवाचित्वात्—ईकारस्य व्यापकचित्तवृत्तिवाचित्वात् वर्णद्वययोगात् ए—स्वात्माकाराकारिततुरीयाखण्डचित्तवृत्तिः शुद्धब्रह्मज्ञानमिति यावत्—ईल नाशयतीत्यर्थः ।

## ॥ एवं स्वप्नदृष्टान्तः ॥

अत्र स्वप्नप्रबोधवत् प्रत्यग्ब्रह्म प्रबोधे सत्यपि जीवन्मुक्तानां तूलाज्ञानस्य सत्वात् प्रपञ्चो न नश्यतीति न स्वप्नसाम्यमिति शङ्क्यम्—

यथा मरुमरीच्यां सूर्यास्तमनपर्यन्तं जलप्रतीतिः मरीच्यपगमने न तत्प्रतीतिः अत्र जलाभावावगमात् जलप्रतीतावपि न तत्र भ्रान्तिः प्रवृत्तिर्वा—तथैवात्रापि देहारम्भककर्मास्तमनपर्यन्तं लोकव्यवहारप्रतीतिः न तत्र सत्यबुद्धिर्व्यवहारः तत्प्रारब्धनाशे सति ब्रह्मीभूतएव जीवन्मुक्तः इति न स्वप्नसाम्यवैषम्यम् ।

अत्र मरुमरीचिकादृष्टान्तमुपदिशति—यथा ईल ह्रीमिति—ईकारप्रश्लिष्टं इ—अर्चिभिः मरीचिभिरित्यर्थः "इकारः फणरत्नार्चि" ष्विति कोशात् ई—दीप्तः "ई दीप्तावि"ति धातोः लः भूप्रदेशः

ळवर्णस्य पृथ्वीबीजत्वात् खण्डवाचित्वाच्च रविमरीचिप्रदीप्तभूप्रभेद-प्रदेशइत्यर्थः तस्मिन् ह्रीं–ह–जलं "हश्शिवे सलिले शून्य" इति कोशात् मरुमरीचिजलभ्रमइत्यर्थः। तस्य रात् हानात्–"रं क्लीबे रुधिरे" त्यारभ्य "विरसे त्यागतीक्ष्णयो" रिति कोशात् रवर्णस्य त्यागवाचित्वात्–ज्ञातं ई–यथार्थज्ञानं नात्र जलं किं तु मरीचिरेवेति ज्ञानं भवतीत्यर्थः–तथा के ब्रह्मणि–ए–विद्या परब्रह्मविद्या जगत्सत्य-त्वभ्रमनिवारिणीत्यर्थः।

"मत्तोऽन्यदस्ति चेन्मिथ्या यथामरुमरीचिका।
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत्" ॥ इति श्रुतेः

॥ एवं मरुमरीचिकादृष्टान्तः ॥

जीवन्मुक्तस्य जगत्प्रतीतिसत्वेऽपि अज्ञत्वकर्तृत्वसुखदुःख भोक्तृत्वादिजीवत्वभ्रमो नास्तीत्यत्र रज्जुसर्पदृष्टान्तमुपदिशति–यथा ई–सर्पः तस्य फणिवाचित्वात्–अत्र ईकार प्रश्लेषात् ई–आप्तः सर्पा-कारमापन्नइत्यर्थः–ळः–रज्जुखण्डः तस्य पार्थिवबीजत्वान् खण्डवा-चित्वाच्च ईळः रज्जुसर्पभ्रमइत्यर्थः। तस्य ह्र–हरणाज्ज्ञातं ई–यथा-र्थज्ञानं नायं सर्पः रज्जुरेवेति तथा ए अकारवाच्ये प्रत्यगात्मनि ई–अविद्या ईकारस्य गुहावाचित्वात् जीवन्मुक्तस्य देहेन्द्रियबुद्ध्यादौ अहमिति कर्ता भोक्तेत्यादिरूपा चाविद्या एकारप्रश्लिष्टाकारेण अ–नास्तीत्यर्थः।

"रज्जुसर्पेण दष्टश्चेत् नरो भवतु संसृतिः" ॥

इति श्रुतेः किं तु कः—ब्रह्ममात्रः सच्चिद्घनानन्दघनोऽसङ्गोऽहमित्येवावतिष्ठत इत्यर्थः ।

॥ एवं रज्जुसर्पदृष्टान्तः ॥

एवमसङ्गात्मस्वरूपस्य जीवन्मुक्तस्य कथं जगत्प्रतीतिव्यवहार इति चेत्—इन्द्रजाला वेक्षणमिवेत्युपदिशति—

यथा ईलेति—ई नेत्रं—इकारस्य ईकारस्य च दक्षिणवामनेत्रबीजत्वात् तत् लाति आदत्ते पिधत्तइति च ईला "लादानाऽदान" इति धातोः यथार्थवस्तुदृष्टिपिधानकरी अयथार्थवस्तुदृष्टिविधानकरी चेयं जालविद्येत्यर्थः जालविद्यावदेव ह्रीं—जीवन्मुक्तस्य सर्वप्रपञ्चव्यवहारइत्यर्थः ।

"यएकोजालवानीशतईशनीभिः
सर्वान् लोकानीशतईशनीभिः ।
य एवैक उद्भवेसम्भवे च
यएतद्विदुरमृतास्ते भवन्ति ॥

पश्यन्तमेतज्जगदिन्द्रजालं
असङ्गमेतत् स्पृणुते कथं माम्" ॥

इति श्रुतेः ए—अवर्णस्य आत्मनः ई—विद्या आत्मविद्या—तु सदा के—परे ब्रह्मणि तादात्म्येनैव विराजत इत्यर्थः—

॥ इत्थमिन्द्रजालदृष्टान्तः ॥

अथ तादृशीमात्मविद्यामुत्पादयितुं देहत्रयविचारं व्युत्पादयति हसकेति क—हे आत्मबुभुत्सो त्वं ह्रीं—अत्र ह्—स्थूलदेहः र—सूक्ष्मदेहः इ—कारणदेहः तान् त्रीन् स्थूलसूक्ष्मकारणदेहान् ई—प्रकाशकं म् आत्मानं देहत्रयविलक्षणं जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयसाक्षिणं तुरीयं प्रत्यञ्चमात्मानं हल गृहाण स्वात्मरूपतया जानीहीत्यर्थः "ह्रीं शरीरिणी, ह्रीङ्कारपञ्जरशुकी" त्यादि स्मरणात् ह्रीङ्कारस्य शरीरत्वपञ्जरत्वोपपादनात् देहत्रयाणां जडत्वात् दृश्यत्वाच्च हस अनात्मत्वेन निस्सारयेत्यर्थः ॥

"घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो भवेत् ।
देहद्रष्टा तथा देहः नाहमित्यवधारय" ॥

इत्यादि वचनात् यः सुप्तस्स्वप्नमद्राक्षं सोऽहमिदानीं जागृमीत्यनुभवाच्च किं च देहत्रयादिकमनात्मत्वेन हित्वा तत्साक्षिणं चिद्रूपं स्वात्मत्वेन गृहीत्वा पुनः शरीरादिकं ह्रीं हरति स्वस्मिन्नेव धारयतीति ह पुनश्च देहत्रयादेः स्वस्मिन्नध्यस्तत्वात् ई तदधिष्ठानतया प्रकाशमानं म् निर्विकल्पं अखण्डसच्चिदानन्दमात्मानं वृत्तिव्याप्त्या साक्षात्कृत्य तदात्मनाऽवतिष्ठेत्यर्थः ।

"स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादि विचित्रभोगैः
स एव जाग्रत् परितृप्तिमेति ॥

स्वप्ने सजीवस्सुखदुःखभोक्ता
स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने
तमोऽभिभूतस्सुखरूपमेति ॥

पुनश्च जन्मान्तरकर्मयोगात्
स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवः
ततस्तुजातं सकलं विचित्रम् ॥

आधारमानन्दमखण्डबोधं
यस्मिन् लयं याति पुरत्रयं च" ॥

इत्यादिश्रुतेः ।

॥ एवं देहत्रयविचारः ॥

अथ स्वात्मनः पञ्चकोशातीतत्वमुपदिशति द्वितीयखण्डे ह सकेति—हः अन्नमयकोशः हकारस्य आदित्यवाचित्वेन "आदित्योऽन्न" मिति श्रुतेः पितृमातृभुक्तान्नरसविकाररूपत्वात् किं च हकारस्य मुखगतिसाधनपादादिवाचित्वात् "हन हिंसागत्यो" रिति धात्वर्थेन आध्यात्मिकादिभिर्हन्यमानत्वाच्च स्थूलदेहइत्यर्थः सः प्राणमयकोशः सकारस्य वायुवाचित्वेन पञ्चप्राणवायुरूपत्वात् कर्मेन्द्रियपञ्चकसहित-पञ्चप्राणरूपः कः मनोमयकोशः कवर्णस्य उक्तकोशेन चित्तवाचित्वेन तत्पर्यायरूपत्वात् ज्ञानेन्द्रियपञ्चकसमेतमनोरूपः हः विज्ञानमयकोशः

हकारस्याहं बुद्धिरूपत्वात् ज्ञानेन्द्रियपञ्चकसंयुक्तबुद्धिरूपः लः आनन्दमयकोशः "लो दीप्तौ द्यां लश्च भूमौ भयेचाह्लादनेऽपि चे" त्येकाक्षरकोशात् लवर्णस्याह्लादवाचित्वात् सुषुप्तावविद्यायां लयादानन्दरूपइत्यर्थः ह्रीं एतेषां पञ्चकोशानां ह्र सम्यग्विचारेण हरणादनात्मत्वेन त्यागात् ई तुरीयं म् स्वात्मज्योतिरित्यवधारयेत्यर्थः "अं शब्दो वक्रवाक्येऽतिदीर्घेऽञ्जलिनियोगयोः । सप्तस्वरान्तमानेच परंज्योतिषि च स्मृत" इति नानार्थरत्नमालाभिधानात् अनुस्वारस्य ज्योतिर्वाचित्वात् ।

"एतदन्नमयमात्मानमुपसंक्रम्य
एतत्प्राणमयमात्मानमुपसंक्रम्य
एतन्मनोमयमात्मानमुपसंक्रम्य
एतद्विज्ञानमयमात्मानमुपसंक्रम्य
एतदानन्दमयमात्मानमुपसंक्रम्य
कामान्नीकामरूप्यनुसञ्चरन्
एतत्सामगायन्नास्त"

इत्यादिश्रुतेः एवमात्मनः पञ्चकोशातीतत्वोपदेशः ।

अथ स्वात्मानुसन्धानप्रधानसाधनमुपदिशति — द्वितीयखण्डे हसेति हं परं ब्रह्म "हं क्लीवमखमुखयोः कणिते मणिरोचिषि । परब्रह्मामन्त्रणयो" रिति रत्नमालाभिधानात् हृदयकुहरान्तर्निविष्टान्तःकरणसन्निहितं तुरीयमखण्डं चैतन्यमित्यर्थः सं उक्तं वृत्तिज्ञाननिवहात्मकमन्तःकरणं "सं क्लीवे स्यन्दनपथे ज्ञाने ध्याने निवारण" इति

कोशात् इच्छाहं बुद्धिवृत्तावन्तः करणे आदर्शइव प्रतिभासमानत्व-मेव सन्निहितत्वं तथा च तुरीयप्रत्यगात्मप्रतिविम्बरूपः प्रमाता जीव-इत्यर्थः यद्वा प्रत्यगात्मनश्चिदाकाशरूपत्वात् अहं बुद्ध्यवच्छिन्नो जीवः घटाकाशादिवदित्यर्थः । अत्र सकारस्य उपासनाकाण्डोक्तन्यायेन त्रि-विन्दुरूपत्वात् समष्ट्या अहङ्कारवृत्तिरूपः अत्र ऊर्ध्वविन्दुर्बुद्धिरिति वृत्तिरूपः तिर्यक् विन्दुद्वये दक्षिणविन्दुर्मनइति वृत्तिरूपः वामविन्दुस्तु चित्तमिति वृत्तिरूपइति चार्थः उक्तान्तःकरणबुद्धिवृत्त्यासह कं कन्यते प्रकाश्यते ज्ञायतेऽनेन पृथिव्यादिकमिति चक्षुरादीन्द्रियजातमित्यर्थः । तेन चक्षुरादीन्द्रियजातेन हं वाह्याकाशं तत्र गतं लं पृथिव्यादिकं वस्तु-जातं तस्य हृ हरणात् सम्यक् ग्रहणात् तत्तदाकारेण मूषानिषिक्तवत् परिणामादित्यर्थः । ई तत्तदाकारबुद्धिवृत्तिः । तां बुद्धिवृत्तिं तद्व्याप्त-पदार्थांश्च म् विन्दुः ब्रह्मचैतन्यमेव प्रबोधयति । स्वान्तःसन्निहितब्रह्म-चैतन्यसंवलिता बुद्धिवृत्तिः चक्षुरादीन्द्रियद्वारा वहिर्निर्गत्य पार्थिवादि पदार्थेषु तत्तत्पदार्थाकारतां आप्नोति तद्बुद्धिवृत्तिं तद्व्याप्तपदार्थांश्च तद्ब्रह्मैव वोधयति प्रकाशयति तथा हि लोके अयं घटइति ज्ञानं घटमहं जानामीत्यनुव्यवसायज्ञानं च भवति यथा तडाकनिष्ठं जलं तत्तद्द्वारा वहिःकेदारादौ तत्तदाकारं व्याप्नोति तथा आत्मसन्निहितप्रमातृबुद्धि-वृत्तिः चक्षुरादितत्तदिन्द्रियद्वारा वाह्यपदार्थान् तत्तदाकारतया व्याप्नो-तीत्यर्थः । किं च हस्तद्वयपरिमाणसन्निकृष्टघटादौ बुद्धिवृत्तिव्याप्तौ सत्यां चक्षुरादीन्द्रियघटयोर्मध्यस्थहस्तद्वयपरिमाणरूपाकाशे निराका र-तया बुद्धिवृत्तेः सत्त्वग्रहणात् तदाकाशं तद्बुद्धिवृत्तिं च ब्रह्मचैतन्यमेव

प्रकाशयति नीरूपस्याऽकाशस्य चक्षुषा साक्षाद्ग्रहणासम्भवेऽपि सूर्य-प्रकाशव्याप्तचक्षुषा ग्राह्यत्वात् । तदपि न युक्तं यदि मन्यसे लोके आकाशमिति कश्चित् पदार्थोऽस्तीति व्यवहारोऽपि लुप्येत । अस्तु नामेति चेत् न तच्छास्त्रस्य तद्विदां च सम्मतं अनुभवविरुद्धत्वात् ।

"तस्माद्वा एतस्मादात्मन आकाशस्संभूत" इत्यादिश्रुति-विरोधाच्च किं च सूर्यप्रकाशव्याप्तचक्षुषा आकाशग्रहणस्य श्रुत्यैवोप-पादितत्वाच्च तथा हि श्रुतिः ।

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् तद्विप्रासो विपन्यवः । जागृवांसस्समिन्धते विष्णोर्यत्प-रमं पद" मिति अस्या अयमर्थः । परमं पृथिव्यादिभ्यउत्कृष्टं विष्णोः पदं विष्णुपदमाकाशमित्यर्थः । दिवि द्योतने प्रकाशे आततं व्याप्तं चक्षुः चक्षुरिन्द्रियमिव प्रकाशे व्याप्तं चक्षुरिन्द्रियं यथा सदा पश्यति आकाशं जानातीत्यर्थः । तथा सूरयः विद्वांसस्तत्त्वविन्निष्ठाः कीदृशा इत्युच्यन्ते तद्विप्रासः ब्रह्मतत्वश्रवणशीलाः । विपन्यवः । तन्मननशीलाः जागृवांसः तस्मिन्नेव ध्यानशीलाः । एवं गुरुमुखात् वेदान्तमहावाक्यादिश्रवणमनननिदिध्यासनपराः आरूढास्सूरय - इत्यर्थः । विष्णोः सर्वव्यापकस्य परब्रह्मणः परमं सर्वोत्कृष्टं सर्वो-पाधिविनिर्मुक्तं सच्चिदखण्डैकरसं पदं स्वरूपं यत् समिन्धते सर्वदा सर्वथा सर्वत्र प्रकाशते तत् उक्तं परब्रह्मस्वरूपं पश्यन्ति जानन्तीति तस्मात् चक्षुर्द्वारा बुद्धिव्याप्तं सर्वमपि हृदयाकाशबाह्याकाशसन्निहितं एकमेव ब्रह्मचैतन्यं प्रकाशयतीत्यर्थः ।

अथ तृतीयखण्डे सकलेति सकार ककार लकाराक्षराणां क्रमेण सत्यज्ञानानन्दरूपस्योक्तत्वात् सं अस्तीत्यर्थः कं भाति लं मनोलयरूपत्वात् प्रियमित्यर्थः । ह्रीमित्यत्र ह नाम तस्य उक्तकोशेन शब्दवाचित्वात् र रूपं तस्य अग्निबीजत्वात्—

"रं क्लीबे रुधिरे मूर्ध्नि ध्यानव्योमाण्डकुक्षिष्वि"ति कोशाच्च व्योमाण्डादिवाचित्वात् पुनश्च ह्रकारेणैव उक्तकल्पितनामरूपयोर्हरणात् प्रहाणात् ईं अस्ति भाति प्रियमिति त्रयाणां सारभूतं सच्चिदानन्दं परं ब्रह्ममात्रमेवेति ईल ईर अवधारय समाधेहीत्यर्थः ।

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकं आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयं ।"

"उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ।
समाधिंसर्वदा कुर्यात् हृदये वाऽथ वा वहिः ॥"

इति श्रुतेः एवं स्वात्मानुसन्धानोपदेशः ।

## ॥ अथ समाधिषट्कं दर्शयति ॥

तृतीयखण्डे अस्य खण्डस्य सकलेति ह्रीमिति द्वैविध्येन सविकल्पनिर्विकल्पकभेदात् द्विविधः सविकल्पोऽपि सं दृश्यं कः शब्दः तयोः लः खण्डनं वेधनमिति ग्रहणात् दृश्यानुविद्ध शब्दानुविद्धभेदात् द्विविधः दृश्यानुविद्धो नाम हृदि रागद्वेषादिवृत्तीनां दृश्यानां साक्षित्वेन स्वात्मानुसन्धानं शब्दानुविद्धो नाम "असङ्गस्सच्चिदान-

न्दस्स्वप्रकाशोऽहमद्वयः" इत्यादिशब्दानुवेधनेन स्वात्मानुसन्धानमिति। निर्विकल्पको नाम दृश्यशब्दानुविद्धरूपविकल्पानप्यनवेक्ष्य स्वात्मरसानुभूतिः तन्निर्विकल्पकमुपदिशति ह्रीमिति ह्र उक्तदृश्यशब्दानुविद्धविकल्पहरणात् ई सच्चिदानन्दानन्तब्रह्ममात्रावस्थितिरित्यर्थः। एतत्समाधित्रयमपि यथा आन्तरे तथा बाह्येऽपि समाधित्रितयं साधनीयं इति सकलेति पदद्वये न ह्रीमिति पदद्वयेन च अन्तर्दृश्यानुविद्धान्तश्शब्दानुविद्धान्तर्निर्विकल्पकबाह्यदृश्यानुविद्ध बाह्यशब्दानुसहजसमाविद्ध बाह्यनिर्विकल्पकरूपषड्विधसमाधिं च सम्यगनुतिष्ठेत्यर्थः एवमनुष्ठिते सम्भाव्यं सहजसमाधिं दर्शयति सकलेति—सं ज्ञानं घटादि पदार्थाकारकं यत्र यत्र भवति तत्र तत्र कं ब्रह्मैव प्रकाशते इति लात् निश्चयात् ह्रीं ह्र ब्रह्मणि कल्पितसर्वविकल्पानां हरणात् ई अखण्डसच्चिदानन्दघनमात्रं सर्वत्रावेक्षस्वेत्यर्थः।

"सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।
दृश्यशब्दानुविद्धेन सविकल्पः पुनर्द्विधा॥
कामाद्याश्चित्तगा दृश्याः तत्साक्षित्वेन चेतनम्।
ध्यायेत् दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥
असङ्गस्सच्चिदानन्दः स्वप्रभोद्वैतवर्जितः।
अस्मीति शब्दविद्धोऽयं समाधिस्सविकल्पकः॥
स्वानुभूतिरसावेशात् दृश्यशब्दाद्युपेक्षितुः।
निर्विकल्पस्समाधिस्स्यात् निवातस्थितदीपवत्॥

हृदीव बाह्यदेशेऽपि यस्मिन् कस्मिंश्च वस्तुनि ।
समाधिराद्याद्दङ्मात्रात् नामरूपपृथक्कृतिः ॥
स्तब्धीभावो रसास्वादात् तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिः षड्भिर्नयेत् कालं निरन्तरम् ॥
देहाभिमाने गळिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र परामृतम्" ॥

इति सरस्वतीरहस्योपनिषत्प्रतिपादनात् ।

अथ सविकल्पकनिर्विकल्पकरूपं सम्प्रज्ञाता सम्प्रज्ञात नाम समाधिमुपदिश्य तत्समाधिसिध्युपायसमाधिं उपदिशति—

प्रथमखण्डे कः चित्तं चित्तरूपमित्यर्थः । ए भूताकाशं ईल प्राप्य आकाशं चित्तमयं कुर्वित्यर्थः । तदाकाशमयं चित्तमपि ह्रीं—ह्र हृत्वा विलीय ईं निर्विकल्पकब्रह्मात्मकं निश्चलं भूयाइत्यर्थः ।

"आकाशं मानसं कृत्वा मनः कृत्वा निरास्पदम् । निश्चलं तद्विजानीयात् समाधिस्तस्य लक्षणम्" इति स्मरणात् उक्तसमाधिसिद्धेरुपायान्तरं उपदिशति द्वितीयखण्डे हसेति हे आकाशे सं आत्मानं के आत्मनि हं—आकाशं चलात् तन्मयीकृत्य ह्रीं ह्र तद्विकल्पमपि हृत्वा ईं ब्रह्मी भवेत्यर्थः ।

"खमध्ये कुरुचात्मानमात्ममध्ये च खं कुरु ।

आत्मानं स्वमयं कृत्वा न किञ्चिदपि चिन्तयेत् " ॥

इति स्मरणात्—

एवं निर्विकल्पसमाहितचित्तः तृतीयखण्डे व्यवहारकाले सकलं सर्वं जगत् ह्रीं मायामात्रमिति ईल अवगच्छ वस्तुतस्तु स्वात्मनः सर्वकल्पनाधिष्ठानभूतत्वात् सकलं सर्वं ह्रीं अखण्डसच्चिदानन्दघनमात्रं परं ब्रह्मेति ईल समालक्षयेत्यर्थः । एवंभूतो जीवन्मुक्तः सकलानां मायाऽविद्यापरिकल्पितानां मिथ्याभूतानां देहादिप्रपञ्चानां ह हरणात् कर्मवासनाविलयात् ईं शुद्धसत्तामात्रं कैवल्यं परं ब्रह्मैव भवतीत्यर्थः ।

" न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्त इत्यादि श्रुतेः—

एवं जीवन्मुक्तिर्विदेहमुक्तिश्चोपदिष्टा भवति—

अथ ग्रन्थं समापयन् परदेवतां स्तौति ।

क ए इति ए शिवकामेश्वरि के परब्रह्मात्मक श्रीकामेश्वरे तदुत्सङ्ग इत्यर्थः । ह्रीं सर्वसाक्षिणीं चैतन्यरूपिणीं कहलह्रीं सर्वभोगज्ञानसम्पत्समृद्धिदायिनीं सकलह्रीं सकलरूपिणीं सर्वाङ्गसुन्दरीं श्रीं सच्चिदानन्दमयीं त्वां परदेवतां ईल ईडे स्तौमि हस प्रसीद प्रसीद इति प्रार्थयन्निमां व्याख्यां श्रीविद्यात्रिपुरसुन्दरीपादारविन्दयुगळे समर्पयन् पुनः प्रणौति—

कर्मोपासनविज्ञान काण्डशास्त्रार्थगोपिताम् ।
ललितां त्रिपुरां वन्दे श्रीविद्यापरदेवताम् ॥

॥ एवं ज्ञानकाण्डसारार्थस्सम्पूर्णः ॥

इति श्रीमच्छृङ्गगिरिमठाधिवासिनां परमहंसपरिव्राजक श्रीशङ्कराचार्याणां श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनां अन्तेवासिना "श्रीशिवानन्दनाथे"ति दीक्षाभिधानेन श्रीकेरळस्थ दक्षिणगिरिप्रान्तगत पेरुंकुळग्रामवासिना वीरराघवशास्त्रिणा "श्रीसूक्तदीपिका" श्रीशिवपञ्चाक्षरीकल्पलतिका" "गायत्री तत्वमाला" "शारीरकचतुस्सूत्रीरहस्या" त्याद्दि व्याख्याकर्त्रा "षोडशीमानसपूजा," "महाषोडशीमालिका" द्यनेकस्तोत्रकृता विरचितेयं "श्रीविद्यात्रिकाण्डसारार्थबोधिन्या"ख्या श्रीविद्यामन्त्रव्याख्या सम्पूर्णा ॥

श्रीविद्यायै नमः ॥
श्रीमहात्रिपुरसुन्दर्यै नमः ॥
श्रीराजराजेश्वर्यै नमः ॥
श्रीललिताम्बिकायै नमः ॥
श्रीपरदेवतायै नमः ॥

शुभं भूयात् । शुभं भूयात् । शुभं भूयात् ।
ओं ह्रीं नमः ओं ह्रीं नमः ओं ह्रीं नमः
ओं शान्तिः शान्तिः शान्तिः

---

Printed by V. Ramaswamy Sastrulu & Sons at the Vavilla Press, Madras.